सखा [1]ह्वयतामुपहूताꣳ हो इडोपहूता हे सासि जुषस्व मेड इत्युपाꣳशूक्त्वोच्चैर्निरुक्तामुपह्वयते । स यदि सर्वां प्राशिष्यन्स्यात्पाणौ कृतानि प्राश्य चमसादेव प्राश्नीयादथ यदि दित्सेद्वा[2] निधित्सेत[3] वा पुरोडाशशकलमवच्छिद्यैव प्राश्नीयादिडासि स्योनासि स्योनकृत्सा नो रायस्पोषे सुप्रजास्त्वे धा सुखस्य त्वा द्युम्नाय सुरभ्यास्यत्वाय[4] प्राश्नामीति । प्राश्याप आचम्य प्राचीं वोदीचीं वोदकराजिं निनयति तूष्णीमिति न्वेवाज्यस्य[5] वचो[6] । ऽथाप्येतं जपं जपति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तामित्यनूयाजानिष्ट्वा शंयुवाकमुक्त्वा[7] बर्हिष्यञ्जलिं

---

१ The following passage runs thus in the MSS.: ह्वयतामुपहूताहो उपहूतां । हो इहेडासिजुषस्वमे उमत्युपांशू० Be; ह्वयतामुपहूताꣳ हो इडोपहूतोपहूतेडातं जुषस्वमेडा इत्युपांशु० B; ह्वयतामुपहूतꣳ होपहूताहेसासिजुषस्वमेडावुपाꣳशू० J; ह्वयतामुपहूतꣳ होइडोपहूताहसासिजुषस्व इत्युपाꣳशू० F; ह्वयतामुपहूतंहोइडोपहूताहेसासिजुषस्व मेडा इत्युपांशू० T; ह्वयतामुपहूताꣳ हो उपहूताहोइडेडासिजुषस्व मे २ मे २ इत्युपाꣳशू० H.

२ Thus T; दिशेद्वा Be J H F; दित्योद्वा B.

३ भिनित्सेत B; तिनित्सेत H; दिधौत्सेत T; निनिष्विल्वेत Be; निनिधिश्येत J; निनिधिषत F.

४ Corrected acc. to S'āṅkh. śrs. I. 12. 5; B: सुरभ्यस्यत्वाय, the other MSS more or less corrupt, some omit the word.

५ Thus Be T; ०वाघ्यस्य B; ०वाजस्य HF; ०वाज्य J; Bh. seems to read name of the ṛṣi: श्याव ।

६ Thus T; वचायथा F; वाचोया० H B Be; वाचाया० J.

७ Be om. these two words; इष्ट्वा instead of उक्त्वा BHF.

हुत्वा निह्नुते यज्ञ शं च म उप च मे प्रजापते यज्ञ यत्ते न्यूनं यदु ते ऽतिरिक्तं कर्म प्रजापतौ[1] यज्ञ तदित्यथ दक्षिणार्धे[2] वेद्यै वेदं[3] निधाय[3] यजमानं वाचयति ॥ २९ ॥

येन त्वं देव वेद[4] देवेभ्यो वेदो ऽभवस्तेनास्मभ्यं वेद एधि। वेदो ऽसि वित्तिरसि विदेयाहं प्रजां पशूंस्स्वर्गं लोकम्। कर्मासि करुणामसि क्रियासमहं पुण्यं कर्म। सनिरसि सनितासि सनेयमहमदो घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमिति पत्नीसंयाजानिष्ट्वा फलीकरहोमे हुते वेदे पत्नीं वाचयति वेदो ऽसि वित्तिरसि विदेयाहमदः। कर्मासि करुणामसि क्रियासमहमदः सनिरसि सनितासि सनेयमहमदो घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमिति विस्रस्य वेदमर्धानि पत्न्यै प्रयच्छति तानि पत्न्यन्तरोरू वा न्यस्यति[5] दक्षिणेन

---

१ Thus BT ( only with यदतिरिक्तं instead of यदुतेतिरिक्तं T ); तउपचत प्रजापते यज्ञपते नूनं यदतिरिक्तं कर्मप्रजापतौ Be; तउपचते प्रजापते यज्ञयन्ते न्यूनं यदतिरिक्तं कर्मप्रजापतौ H; उपचतउपचत प्रजापते यज्ञयत्ते नूनं यदतिरिक्तं कर्मप्रजापते J; मउपचप्रजापतेयज्ञं यत्ते नूनं यदरिक्तं कर्मप्रजापते F.

२ Thus BTJ; दक्षिणास्ये F; दक्षिणा H; दक्षिणाविधे B ( which omits वेद्यै )।

३ Thus BTHF; वेदं om. J Be; वेदे ins. after निधाय TB; वेदं ins. after निधाय Be.

४ Thus ( देववेद ) Be H; BJ om. वेद; F om. देव।

५ Conjectural reading. थंतरोरुपान्यस्य J; थंतरोषपन्यस्य Be; थंतरोरुपन्यस्य H; थंतरोरुप न्यस्यति B; थन्तरोर्वोरुपचास्यति T; तववोरुपत्न्यास्य F.

वोरुणोपनिग्टह्णीते । ऽथेतराणि प्राङ्नावृत स्तृणन्नेति तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्- अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनमित्यथ यान्यतिशिष्यन्ते तानि बर्हिषि संन्यस्यत्यापृणो ऽसि संपृण प्रजया मा पशुभिरापृणेत्यथ यथाप्रपन्नं निष्क्रम्याग्रेणाहवनीयं परीत्य दक्षिणत उदङ्मुखस्तिष्ठन्नाहवनीयमुपतिष्ठते ऽयाड्यज्ञं हविषो जातवेदा अदब्धो अन्ततः पूर्वो अस्मिन्निषद्य । सन्वन्सनिं सुविमुचा नो विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् ॥ एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा । उत प्रणेष्यभि वस्यो अस्मान्सं नः सृज सुमत्या वाजवत्या ॥ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अग्निरिन्द्रो बृहस्पतिर्विश्वे[१] मुञ्चन्तु मरुतः स्वर्का इत्येतयैव जपा दर्शपूर्णमासयोरिष्टीनां चातुर्मास्यानां पशुबन्धस्य सौत्रामण्या इति । ॥ ३० ॥

अथ पशावुपधीयन्ते । यदा जानात्यग्नये मथ्यमानायानुब्रूहीति तदेते ऋचौ जपति यद्वो वयं प्रमिनाम व्रतानि ॥ यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजातीति । मैत्रावरुणदण्डे ऽध्वर्युर्यजमानं वाचयति त्वां गावो ऽवृणत राज्याय

१ विश्वेदेवा B Be H, but comp. Kauś. sū. 97. 8, Kāty. śrs. XXV. I. 11.

त्वाꣳ हवन्त मरुतः स्वर्काः। वर्ष्मन्चत्रस्य ककुभि शिश्रियाण-स्ततो न उग्रो विभजा वसूनीति। तमग्रे गृहीत्वा मैत्रावरुणाय प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीति। तꣳ स श्लूरतः प्रतिगृह्णाति मित्रावरुणयोस्त्वा प्रशास्त्रोः
५ प्रशिषा प्रतिगृह्णामीति दक्षिणोत्तर्येयैनमूर्ध्वमुन्मार्ष्टि वक्रो ऽविधुरो भूयासमिति। तमादाय संप्रेष्यति होता यक्षदग्निꣳ समिधा सुषमिधा समिद्धमितीत्यान्तं पशोः। ॥ ३१ ॥ दशमः ॥

## इति तृतीयः प्रश्नः ॥

पशुना यक्ष्यमाणो भवति । स उपकल्पयते पौतुद्रवान्परिधीन्गुल्गुलु[1] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकां या पेत्वस्यान्तरा शृङ्गे द्वे रशने द्विगुणां च त्रिगुणां च द्वे वपाश्रपणी विशाखां चाविशाखां च हृदयशूलं कार्ष्मर्यमयान्परिधीनौदुम्बरं मैत्रावरुणदण्डं मुखेन संमितमिध्माबर्हिरिध्मं प्रणयनीयं प्लक्षशाखामिडसूनं यवान्यवमतीभ्यः सक्तून्सक्तुहोमाय पृषदाज्याय दधि हिरण्यमित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा षड्ढोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचत्याज्यस्थालीꣳ स्रुवां बर्हिर्हिरण्यमुदपात्रꣳ । कृयन्ति तक्षाणꣳ सपरशुमाहेहि[2] यजमानेति पूर्वया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूप स्पष्टो भवति यत्र वा वेत्स्यन्मन्यते । स यः समे भूम्यै स्वाद्योने रूढो बहुपर्णो बहुशाखो ऽप्रतिशुष्काग्रः प्रत्यङ्ङुपनतस्तमुपतिष्ठते ऽत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परो ऽवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इत्यथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्त्वित्यूर्ध्वाग्रं बर्हिरनूच्छ्रयत्योषधे त्रायस्वैनमिति । स्वधि-

---

१ Thus Keś; गुगुलु B; गग्गुलु Be H; गुल्गुलु T; वल्गुलु F.

२ Thus only Be H; the other MSS. om. आह ।

तिना तिर्यञ्चं प्रहरति स्वधिते मैनꣳ हिꣳसीरिति । यः प्रथमः शकलः परापतति तं प्रज्ञातं निदधाति । तमपरिभिन्दन्ननक्षसङ्गं वृश्चति । प्राञ्चं वोदञ्चं वा प्रयान्तमनुमन्त्रयते दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या संभवेत्यथाव्रश्चने हिरण्यं निधाय संपरिस्तीर्याभिजुहोति वनस्पते शतवल्शो विरोह स्वाहेति । सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशते । ऽन्वग्रꣳ शाखाः प्रसूदयति यं त्वायꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति । पञ्चारत्निं तस्मै वृश्चेदित्येष ब्राह्मणवतामवमस्त्वं परिव्यङ्गपरमं[१] प्रादेशावमं चषालस्य काले परिवासयत्यच्छिन्नो रायः सुवीर इति । यत्परं भवति तस्य चतुरङ्गुलं चषालाय प्रच्छेदयति । तं चतुरश्रिं वाष्टाश्रिं वा कृत्वा वा हरत्या[२] वा हारयत्योह्य निस्तिष्ठत्यवतक्षणानामेव स्वरुं कुरुते । ऽथास्यैषा पूर्वेद्युरेव पाशुबन्धिकी वेदिर्विमिता भवति दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्ची । तां परिस्तीर्य स्तम्बयजुर्हरति । ॥ १ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथ याचति स्फ्यमुदपात्रं बर्हिः

---

१ Thus H Be T; परिष्वंगमपर॰ B; परिष्वंगंपर॰ F.

२ Thus Be H and the Aptoryāma-Sūtra; कृत्वावाहयत्यवाहारयत्यूह्य T; कृत्वावाहयत्यावाहारयत्योह्य B; कृत्वावहरत्यावाहारयेत्वोह्य F.

शम्यामित्येतत्समादायाहेहि यजमानेत्युत्तरेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु स्फ्येनोद्धत्यावोक्ष्य शम्यया चात्वालं परिमिमीते। वित्तायनी मे ऽसीति पुरस्तादुदीचीनकुम्बयान्तरत स्फ्येनालिखति। तिक्तायनी मे ऽसीति दक्षिणतः प्राचीनकुम्बयान्तरत स्फ्येनालिखत्यवतान्मा नाथितमिति पश्चादुदीचीनकुम्बयान्तरत स्फ्येनालिखत्यवतान्मा व्यथितमित्युत्तरतः प्राचीनकुम्बयान्तरत स्फ्येनालिखत्यथ चात्वाले बर्हिर्निधाय तस्मिन्स्फ्येन प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो ऽस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति। हृत्वोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। द्वितीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति। हृत्वोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। तृतीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति। हृत्वोत्तरवेद्यां निवपति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति। तूष्णीं चतुर्थꣳ हरति सह बर्हिषाथाध्वर्युः स्फ्येन चात्वालात्पुरीषमुद्धन्त्यथाग्नीध्रमाहाग्नीदितस्त्रिर्हरेति। ततस्त्रिराग्नीध्रो हरति। यदाग्नीध्रस्त्रिर्हरत्यथाध्वर्युरुत्तरवेद्यै पुरीषꣳ सम्प्रयौति सिꣳहीरसि महिषीरसीति। प्रथयत्युरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति। स्फ्येन सꣳहन्ति ध्रुवासीत्यथैनामद्भिरवोक्षति देवेभ्यः शुन्धस्वेति। देवेभ्यः शुम्भस्वेति सिकताभिरनुप्रकिरति। तां प्रादेशमात्रीं

चतुरश्रां[१] निष्ठाय गम्यया परिमिमीत । उत्तरनाभिमुत्साद्याथैनां प्रतिच्छाद्याभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते ऽभ्रिरसि नारिरसीति । तया यूपावटं परिलिखति यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धं परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदेहीमं यूपावटं खनोपरसंमितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमतिखनतादिति । तꣳ स खनति वा खानयति वा । यावदेवात्राध्वर्युस्तिष्ठति तावदेष प्रतिप्रस्थाताभ्यादधातीध्मं प्रणयनीयमुपोपयमनीः कल्पयन्ति[२] चात्वालादात्मनेन्द्रघोषवतीः प्रोक्षणीरध्वर्युरादत्ते । परिकर्मिणे पञ्चगृहीतमाज्यं प्रयच्छति । ब्रह्मणि संभारा भवन्त्यथ संप्रैषमाहाग्नये प्रणीयमानायानुब्रूह्यग्नीदेकस्फ्ययानुसंधेहीति । चिरुक्तायामुद्यच्छन्ते । होतुर्वंशं यन्त्युत्तरेण वेदिं प्रतिपद्यन्ते । धारयन्त्येतमग्निमथाध्वर्युरिन्द्रघोषवतीभिः प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति । ॥ २ ॥

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विति पुरस्तान्मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः । प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति पश्चाद्विश्वकर्मा त्वादित्यैरुत्तरतः पात्वित्युत्तरतो । ऽथ यत्प्रोक्षणीनामुच्छिष्यते तद्दक्षिणत उत्तरवेद्यै निनयति । यदेव

१ Thus B T; चतुरस्रां the other MSS.

२ Thus B Be T F; कल्पयति H.

तच्च क्रूरं तत्तेन शमयतीति ब्राह्मणम'थैनाꣳ हिरण्यमन्तर्धायाह्वण्या पञ्चगृहीतेन व्याघारयति' सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणे ऽꣳसे' सिꣳहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्याꣳ श्रोण्याꣳ' सिꣳहीरसि रायस्पोषवनिः स्वाहेति दक्षिणस्याꣳ श्रोण्याꣳ' सिꣳहीरस्यादित्यवनिः स्वाहेत्युत्तरे ऽꣳसे' सिꣳहीरस्यावह देवान्देवयते यजमानाय स्वाहेति मध्ये' ऽथ भूतेभ्यस्त्वेति स्रुचमुद्गृह्णात्य'थ पौतुद्रवान्परिधीन्परिदधाति' विश्वायुरसि पृथिवीं दृꣳहेति मध्यमं' ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणम'च्युतक्षिदसि दिवं दृꣳहेत्युत्तरम'थातिशिष्टान्संभारान्निवपति गुल्गुलु[१] सुगन्धितेजनꣳ शुक्लामूर्णास्तुकामग्नेर्भस्मास्यग्नेः पुरीषमसीत्य'थैनान्सꣳस्रावेणाभिघारयत्य'थ[२] प्रदक्षिणमावृत्येध्मं प्रतिष्ठापयति यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्धीत्य'थैनं विस्रस्याहुतिषाहं कृत्वाध्वराहुतिभिरभिजुहोत्यग्निर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रब्रूताद्यज्ञं प्रप्र यज्ञपतिं तिर स्वाहा ॥ वायुर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रब्रूताद्यज्ञं प्रप्र यज्ञपतिं तिर स्वाहा ॥ सूर्यो यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् । देवेभ्यः प्रब्रूताद्यज्ञं प्रप्र यज्ञपतिं तिर स्वाहा ॥ यज्ञो यज्ञं

---

१ Thus F; गुग्गुलु B Be H; गुत्गुलु T (Grantha!).

२ ॰भिजुहोत्यथ Be F.

नयतु प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रब्रूताद्यज्ञं प्रप्र यज्ञपतिं तिर स्वाहेत्यथैता यजमान एव स्वयं जुहोत्यग्निरन्नादो ऽन्नपतिरन्नस्येशे स मे ऽन्नं ददातु स्वाहा। वायुः प्राणदाः प्राणस्येशे स मे प्राणं ददातु स्वाहा। आदित्यो भूरिदा भूयिष्ठानां पशूनामीशे स मे भूयिष्ठान्पशून्ददातु स्वाहेत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवꣳ स्वधितिꣳ स्रुचश्च[१] संमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीꣳ संनह्याज्येन च दध्ना चोदेहीत्याहृतासु प्रोक्षणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवꣳ स्वधितिꣳ[२] स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यग्रहणीं। पत्नीꣳ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धमाज्यानि गृहीत्वा पृषदाज्यग्रहण्यामुपस्तृणीते महीनां पयो ऽसीति। विश्वेषां देवानां तनूरिति द्वितीयं। बर्हिषी अन्तर्धाय दध्यानयत्यृध्यासमद्य पृषतीनां ग्रहं पृषतीनां ग्रहो ऽसीत्यपोद्धृत्य बर्हिषी अथाभिघारयति विष्णोर्हृदयमसीत्येकमिष विष्णुस्त्वानुविचक्रम इति द्वितीयम्। ॥ ३ ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति। वेदिं प्रोक्षति बर्हिः प्रोक्षति। बर्हिरासन्नं प्रच्छ्योपनिनीय पुरस्तात्प्रस्तरं

---

१ Thus B Be T; स्रुवेण instead of स्रुवꣳ H; स्रुवं च स्वधितिं च F and S'rautapad. p. 161.

२ स्रुवं च स्वधितिं च F.

गृह्णाति । पञ्चविधं बर्हिः स्तीर्त्वा[1] प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति । विधृती तिरश्ची सादयति । विधृत्योः प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य याचति यवमतीः प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीं ससुवां स्वरुशकलं मैत्रावरुणदण्डं यूपशकलं हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रक्षालयति यत्ते शिक्वः परावधीत्तक्षा हस्तेन वास्या । आपस्ते तद्वनस्पते ऽपनुदन्तु[2] शुन्धन्तीरिति । यूप एष प्रक्षालितः प्रपन्नः संपन्नचषालः प्रागवटादुपशेते । तमुत्तरेणाहवनीयं तिष्ठन्पराञ्चं प्रोक्षति पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेत्यवटे ऽपो ऽवनयति शुन्धतां लोकः पितृषदन इति । यवान्प्रस्कन्दयति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरिति । बर्हिर्हस्तं व्यतिषज्यावस्तृणाति पितृणां सदनमसीत्यथैनद्धिरण्यमन्तर्धाय[3] सुवाहुत्याभिजुहोति पितृभ्यः स्वाहेति । यूपशकलमवास्यति स्वावेशो ऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्तादित्यथादत्त आज्यस्थालीं ससुवां स्वरुशकलं मैत्रावरुणदण्डमुदपात्रमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यग्रेण यूपं परीत्य दक्षिणत उदङ्मु-

१ अथ ins. H Be (sec. m.)

२ Thus B; वनस्पतेरपनु॰ the other MSS.

३ Thus ( एनत् ) all, see Bh.

स्वास्तिष्ठन्ति पूर्व एवाध्वर्युरपरो यजमानो ऽपरा पत्न्यथ प्रवृह्य चषालं यूपस्याग्रमनक्ति देवस्त्वा सविता मध्वानक्त्वित्यन्तरतश्च बाह्यतश्च स्वभ्यक्तं कृत्वा चषालं प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वौषधीभ्य इत्यथ स्रुवेणाग्निष्ठामश्रिमभिघारयन्नाह यूपायाज्यमानायानुब्रूहीत्यान्तमनक्त्यान्तमेव यजमानं तेजसानक्ति नोपरमनक्ति पत्न्युपरमनक्ति सर्वतः परिमृशत्यपरिवर्गमेवास्मिन्तेजो दधातीति ब्राह्मणमुच्छ्रयन्नाहोच्छ्रीयमाणायानुब्रूहीत्युच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳहेत्यथैनं वैष्णवीभ्यामृग्भ्यां कल्पयति ते ते धामानि विष्णोः कर्माणि पश्यतेति द्वाभ्याꣳ स यत्राग्निष्ठामश्रिमाहवनीयेन संपादयति तद्ध्रुवस्य चषालं परेक्षयति तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततमित्यथैनं प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेत्यन्यूनमनतिरिक्तं परिन्यस्योदपात्रमुपनिनीयाथैतां त्रिगुणाꣳ रशनां त्रिः संभुज्य मध्यमेन गुणेन नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति त्रिः प्रदक्षिणं परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या इत्युपान्ते व्यतिषजत्यान्तं प्रवेष्टयत्यणिमति स्त्रविमत्प्रवयत्यथोत्तरेणाग्निष्ठामश्रिं मध्यमे गुणे स्वरुमवगूहत्यन्तरिक्षस्य त्वा सानाववगूहामीति स्वर्वन्तं यूपमुत्सृजति ॥ ४ ॥ प्रथमः ॥

अथैतं पशुं पल्पूलितमन्तरेण चात्वालोत्करौ प्रपाद्याग्रेण यूपं पुरस्तात्प्रत्यङ्मुखमुपस्थापयति । तमिषे त्वेति बर्हिषी आदायोपाकरोत्युपवीरस्युपो देवान्दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वं प्रजापतेर्जायमाना[1] इमं पशुं पशुपते ते अद्येन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीति । यद्देवत्यो वा भवति । प्रज्ञाते बर्हिषी निधायाधिमन्थनꣳ शकलं[2] निदधात्यग्नेर्जनित्रमसीति । वृषणावन्वञ्चौ वृषणौ स्थ इत्यथारणी आदत्त उर्वश्यस्यायुरसि पुरूरवा इत्यथैने आज्यस्थाल्याꣳ समनक्ति घृतेनाक्ते वृषणं दधाथामित्यथ प्रजातीर्वाचयति गायत्रं छन्दोऽनु प्रजायस्व त्रैष्टुभं छन्दोऽनु प्रजायस्व जागतं छन्दोऽनु प्रजायस्वेत्यथाहाग्नये मथ्यमानायानुब्रूहीति । जात आह जातायानुब्रूहीति । प्रहरिष्यन्नाह प्रह्रियमाणायानुब्रूहीति । प्रहरति भवतं नः समनसाविति । प्रहृत्याभिजुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति । तयाक्ष्णया पशुमभिदधाति दक्षिणमर्धशीर्षमृतस्य त्वा देवहविः पाशेनारभ इति । द्विगुणायै च त्रिगुणायै चान्तौ संदधाति धर्षा मानुषानिति । नियुनक्त्यथैनमद्भिः प्रोक्षत्यद्भ्यस्त्वौषधीभ्य इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति । यद्देवत्यो वा भवति । पाययत्यपां पेरुरसीति ।

---

१ These mantras are given sakalapāṭhena only in H Be.

२ Thus BT Keś. अधिमंथनशकलं H F Be.

स्वात्तं चित्सदेवꣳ हव्यमापो देवीः स्वदतैनमित्युपरिष्टात्प्रोक्ष्याधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोतीति ब्राह्मणमुदूह्य प्रोक्षणीधानम् ॥ ५ ॥

अथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं परि समिधꣳ शिनष्टि वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति संमृष्टे स्रुग्भ्यामुत्तरमथांसꣳस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा पशुꣳ समनक्ति सं ते प्राणो वायुना गच्छतामिति ललाटे सं यजत्रैरङ्गानीति ककुदि सं यज्ञपतिराशिषेति दक्षिणस्याꣳ श्रोण्यामथ यथायतनꣳ स्रुचौ सादयित्वा प्रवरं प्रवृणीते प्रसिद्धꣳ होतारं वृणीतेऽथाश्रावयत्यो श्रावयास्तु श्रौषण्मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादित्यसौ[1] मानुष इति मैत्रावरुणस्य नाम गृह्णात्यथाश्रावयति यद्यत्रात्याश्रावयत्यो[2] श्रावयास्तु श्रौषडग्निर्ह दैवीनां विशां पुरएतायं यजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतꣳ हिमा द्वा यू राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति सीदति होता प्रसवमाकाङ्क्षति प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधः प्रेष्येति वषट्कृते जुहोति प्रेष्य प्रेष्येति चतुर्थाष्टमयोः समानयमानोऽष्टमे सर्वꣳ समानयते परि स्वाहाकृतीभ्यः सꣳस्रावꣳ शिनष्टि दश प्रयाजानिष्ट्वो-

---

१ Thus all MSS. and Keś. except Be, which has प्रणास्त्रादि॰ ।

२ Thus B; the words ॰श्रावयति यद्यत्रात्य om. TF; H Be om. त्रति, but comp. Bh.

दङ्क्त्याक्रम्य स्वरुं च शासं च याचति । तौ जुह्वामक्त्वा[१] ताभ्यां पशुꣳ समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति । प्रयच्छति शासमवगूहति स्वरुमथ यथायतनꣳ स्रुचौ सादयित्वाह पर्यग्नये क्रियमाणायानुब्रूहीत्यथैष आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरेण शामित्रदेशमग्रेण पशुं जघनेन स्रुच इत्येवं त्रिः प्रदक्षिणं पर्येत्यथानुपरिसरणमपाव्यानि जुहोति प्रजानन्तः प्रतिगृह्णन्ति पूर्वे येषामीशे पशुपतिः पशूनां ये बध्यमानमनु बध्यमाना य आरण्याः पशवो विश्वरूपाः प्रमुञ्चमाना भुवनस्य रेत इति । निधायाग्नीध्र उल्मुकं यथेतं त्रिः पुनः प्रतिपर्येत्यथोल्मुकप्रथमाः[२] प्रतिपद्यन्ते । ऽन्वक्छमिता[३] पशुना । पशुमध्वर्युर्वपाश्रपणीभ्यामन्वारभते । वपाश्रपणी यजमानो । ऽथाश्राव्य संप्रेष्यत्युपप्रेष्य होतर्हव्या देवेभ्य इत्यथैतं[४] पशुमन्तरेण चात्वालोत्करावुदञ्चं नीयमानमनुमन्त्रयते नाना प्राणो यजमानस्य पशुना रेवतीर्यज्ञपतिं प्रियधाविशतेति द्वाभ्याꣳ । स[५] यत्रैतदाग्नीध्र उल्मुकं निदधाति तदग्रेण वोत्तरेण वा पशवे निहन्यमानाय बर्हिरुपास्यति पृथिव्याः संपृचः पाहीति । तदेतं पशुं प्रतीचीनशिरसमुदीचीनपादं निघ्नन्त्यकृण्वन्तं मायुꣳ संज्ञपयतेत्युक्त्वैतेनैव यथेतमेत्य पृषदाज्यावकाश आसत इह

१ Thus all ( F : अनक्त्वा ) ।

२ FH om प्रति॰ ।

३ Thus Be ; न्वक्प्रमिता B ; न्वक्शमिता the other MSS.

४ Thus T Be; अथैनं the other MSS.

५ om. BF.

प्रजा विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माꣳ अवन्तु पयसा घृतेनेति । संज्ञप्तं प्राहुर्जुहोति संज्ञप्ताहुतिं यत्पशुर्मायुमकृतेत्यथाभ्यैति[1] शमितार उपेतनेति । पाशात्पशुं प्रमुच्यमानमनुमन्त्रयते ऽदितिः पाशं[2] प्रमुमोक्तैतमित्यथ विशाखयोपसज्येमां दिशं निरस्यत्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमित्यथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्याथैनामादित्यमुदीक्षयति नमस्त आतानेत्यथैनामन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य[3] प्राचीमुदानयन्वाचयत्यनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्यागतामध्वर्युरपो वाचयत्यापो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्मेति । सानुपूर्वं[4] पशोः प्राणानाप्याययति । वाक्त आप्यायतामिति वाचं । प्राणस्त आप्यायतामिति प्राणं । चक्षुस्त आप्यायतामिति चक्षुः । श्रोत्रं त आप्यायतामिति श्रोत्रमेतानेव पुनः संमृशति या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्त एतेन शुन्धतामिति । नाभिस्त आप्यायतामिति नाभिं । पायुस्त आप्यायतामिति पायुꣳ । संप्रगृह्य पदः प्रक्षालयति शुद्धा-

१ Thus TH Be; चभ्येति BF.

२ T gives the first two pādas of this stanza (TS. III. 1. 4. 1), perhaps rightly.

३ Thus B Keś.; °निष्क्रमय्य Be TH; °निष्क्रम्ये F.

४ °पूर्व्यं THF Keś.

यरित्राः शमद्भ्यः शमोषधीभ्यः शं पृथिव्या इति । शमहोभ्यामित्यतिशिष्टा दक्षिणतो ऽनुपृष्ठं निनयति । नयन्ति पत्नीमुत्तानं पशुं पर्यस्यन्ति[१] । तस्य दक्षिणस्य पार्श्वस्य विवृत्तमनु प्राचीनाग्रं बर्हिर्निदधात्योषधे त्रायस्वैनमिति । स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति । छिनत्ति बर्हिर्वि त्वचं छ्यत्यथैतस्यैव बर्हिषो ऽणिमत्सचते । स्वविमदुभयतो लोहितेनाङ्क्तेमां दिशं निरस्यति रक्षसां भागो ऽसीदमहꣳ रक्षो ऽधमं तमो नयामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामीत्यथाप उपस्पृश्य वरीय आच्छायेषे त्वेति वपामुत्खिदति । तया वपाश्रपणी प्रोर्णोति घृतेन द्यावापृथिवी प्रोर्णुवाथामित्यविशाखयोपहत्याधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथैनां प्रदक्षिणमावृत्याग्निरभ्युत्स्य[२] शामित्रे प्रतितपत्यथोल्मुकप्रथमाः प्रतिपद्यन्ते ॥ ६ ॥

अन्वगध्वर्युर्वपयात्र वपाश्रपणी पुनरन्वारभते यजमान । ऐत्युर्वन्तरिक्षमन्विहीत्यथाहवनीयस्यान्तमेष्वङ्गारेषु वपायै प्रतितप्यमानायै बर्हिषो ऽग्रमुपास्यति वायो वीहि स्तोकानामित्यथैनामन्तरेण यूपं चाहवनीयं चोपातिहृत्य तां दक्षिणत उदङ्मुखः प्रतिप्रस्थाता श्रपयत्यथैनाꣳ स्रुवाहुत्याभिजुहोति त्वामु ते दधिरे हव्यवाहमित्यथाह स्तोकेभ्यो ऽनुब्रूहीति । परिहितासु स्तोकीयासु शृतायां वपायां जुह्नुपभृतावादाया-

---

१ ०स्यति Be F.

२ Thus all, except Be which has ०मावृत्या० ; are we to correct प्रदक्षिणमावर्त्य ?

त्याक्रम्याश्राव्याह स्वाहाकृतीभ्यः प्रेष्येति । वषट्कृते जुहोत्यथोदङ्ङत्याक्रम्य सꣳस्रावेण पृषदाज्यमभिघार्य वपामभिघारयत्यथोपस्तीर्य[1] द्विः स्रुवेण वपाꣳ समवलुम्पन्नाहेन्द्राग्निभ्यां छागस्य वपाया मेदसो ऽवदीयमानस्यानुब्रूहीति । द्विरभिघारयत्यत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्येत्यथ पुरस्तात्स्वाहाकृतिꣳ स्रुवाहुतिं जुहोति स्वाहा देवेभ्य इति । वषट्कृते वपां जुहोति जातवेदो वपया गच्छ देवान्त्वꣳ हि होता प्रथमो बभूथ । घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः स्वाहेत्यथोपरिष्टात्स्वाहाकृतिꣳ स्रुवाहुतिं जुहोति देवेभ्यः स्वाहेत्यत्र वपाश्रपणी अनुप्रहरति प्राचीं विशाखां प्रतीचीमविशाखाꣳ स्वाहोर्ध्वनभसं मारुतं गच्छतमित्यथैने सꣳस्रावेणाभिजुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा समुत्क्रम्य चात्वाले मार्जयन्ते । ह्वयन्ति पत्नीꣳ ह्वयन्ति होतारꣳ ह्वयन्ति ब्रह्माणꣳ ह्वयन्ति प्रतिप्रस्थातारꣳ ह्वयन्ति प्रशास्तारꣳ ह्वयन्त्याग्नीध्रमेहि यजमानेतीदमापः[2] प्रवहतावद्यं च मलं च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् ॥ निर्मा मुञ्चामि शपथान्निर्मा वरुणादुत । निर्मा यमस्य पड्बीशात्सर्वस्माद्देवकिल्बिषादथो मनुष्यकिल्बिषादित्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति । तां दिशं निरुक्षति यस्यामस्य दिशि

---

१ After अभिघारयति Bc H F ins. अथाग्नये सोमायेत्याज्यभागाभ्यां चरति ।

२ The words एहि यजमानेति only in B.

द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य यथायतनमुपविशन्ति । ॥ ७ ॥ द्वितीयः ॥

अथ संप्रैषमाहाग्नीत्पशुपुरोडाशं निर्वप प्रतिप्रस्थातः पशुं विशाधीति । निर्वपत्येष आग्नीध्र ऐन्द्राग्नमेकादशकपालमथ प्रतिप्रस्थाता पशुं विशास्ति शमितर्हृदयं जिह्वां वक्षस्तानि साधुं कुरुतात्तनिम मतस्नौ[१] तानि साधुꣳ सव्यं दोरेकचरं कुरुतान्नाना पार्श्वे अवधत्ताद्दक्षिणाꣳ श्रोणिमध्युद्धिं कुरुताद्दक्षिणं दोः सव्याꣳ श्रोणिमणिमद्गुदस्य तानि त्र्यङ्गानि कुरुताद्वनिष्ठुं च जाघनीं चावधत्ताद्वङ्क यूः कुरुतात्त्रिः पशुं प्रच्यावयतात्त्रिः प्रच्युतस्य पशोर्हृदयमुत्तमं कुरुतादिति । शृते पशौ पशुपुरोडाशं याचति । तमुपस्तीर्णाभिघारितमुद्वास्यान्तर्वेद्यासादयत्यथ जुह्वपभृतोरुपस्तृणान आहेन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रूहीति । पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति । प्रत्यनक्त्यथोपभृति स्विष्टकृते सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्त्यत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां पुरोडाशं प्रस्थितं प्रेष्येति । वषट्कृते जुहोत्यथ समावपमान आहाग्नये ऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यत्युपहूतायामिडायामग्नीध आदधाति षडवत्तं । प्राश्नन्ति । मार्ज-

१ Thus Be HF, the Prayoga cited by Schwab, das altind. Thieropfer, page 131, S'rautapadārtha page 175 and Mantramālā; मतस्न B; मतस्न T.

यन्तेऽथ संप्रैषमाहाग्नीदुत्तरबर्हिरुपसादय प्रतिप्रस्थातः पशौ संवदस्वेत्यथैष आग्नीध्रः प्लक्षशाखायामिडसूनमुपगूहति । तदुत्तरबर्हिर्भवत्यथ प्रतिप्रस्थाता पृषदाज्यं विहृत्य जुह्वाᳫं समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य पृच्छति शृतᳫं हवी३ः[1] शमितरिति । शमितैष उत्तरतो हृदयशूलं धारयᳫंस्तिष्ठति । स शृतमिति प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याहाथ शमितुर्हृदयशूलमादाय तेन हृदयमुपतृद्य तᳫं शमित्रे संप्रदाय पृषदाज्येन हृदयमभिघारयति सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहेति । वियूः कृत्वा हरतेत्युक्त्वैतेनैव यथेतमेत्य चतसृषूपस्तृणीते जुह्वुपभृतोरिडाधाने यस्मिᳫंश्च वसाहोमं ग्रहीष्यन्भवत्याहरन्ति तं पशुमन्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं चोपातिहृत्य तं[2] दक्षिणतः पश्चहोत्रासादयत्येतेनैव यूराहरन्त्येतेनैवेडसूनमथ प्लक्षशाखायाᳫं हृदयं निधाय स्वधितिना तस्याग्रे ऽवद्यन्नाह ॥ ८ ॥

मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति । हृदयस्यैवाग्रे द्विरवद्यत्यथ जिह्वाया अथ वक्षसो ऽथ तनिम्नो ऽथ वृक्कयोरथ सव्यस्य दोष्णो ऽथ दक्षिणस्य पार्श्वस्याथ सव्यस्याथ दक्षिणायै श्रोणेरध्युद्ध्यै । त्रैधं गुदं कृत्वाणिमत्स्विष्टकृते निदधाति

१ With pluti sign only Be.

२ H om. ; Be sec. m. del.

स्वविमदुपयड्भ्यो मध्यं[१] द्वेधं कृत्वा जुह्वामवदधात्यथ वृक्यमेदो यूषन्नवधाय तेन जुह्वं प्रोर्णोति ' यूष्णोपसिञ्चत्यभिघारयत्यथोपभृति स्विष्टकृते सर्वेषां त्र्यङ्गाणाꣳ सकृत्सकृत्समवद्यति ' सकृद्दक्षिणस्य दोष्णः पिशितं प्रच्छिद्यावदधाति सकृत्सव्यायै श्रोणेरणिमद्गुदस्याथ वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णोति ' यूष्णोपसिञ्चति[२] ' द्विरभिघारयत्यथ हृदयं जिह्वां वक्षस्तनिम मतस्नौ[३] वनिष्ठुमितीडापात्र्याꣳ[४] समवधाय यूष्णोपसिञ्चत्यभिघारयत्यथ[५] कꣳसे वा चमसे वा वसाहोमं गृह्णाति ' यूष्णोपसिञ्चत्यभिघारयत्यथ पशोरवदानानि संमृशत्यैन्द्रः प्राणो अङ्गेअङ्गे निदेध्यदैन्द्रो ऽपानो अङ्गेअङ्गे विबोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्सलक्ष्माणो भवथ । देवत्रा यन्तमवसे सखायो ऽनु त्वा माता पितरो मदन्त्वित्यथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुम्बतः श्रोरस्यग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्या इति ' संमृष्टस्य पशोः प्रतीचीं जाघनीꣳ हरन्ति ' प्रतिपरिहरन्ति पशुमथ जुह्वपभृतावाददान आहेन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीत्यत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्येति ' प्रतिप्रस्थातैष उत्तरतो

---

१ Thus Be H T Keś. ; मध्यमं BF.

२ अथ ins. Be FH.

३ Thus Be H F Keś. ( sec. m. ) ; मतस्नु BT.

४ BH Be ; इति पाच्याꣳ ; F इडिपाच्यांꣳ ; T totally corrupt.

५ अथ after °सिञ्चति ins. Be F.

वसाहोमं धारयꣳस्तिष्ठति[1] । सो ऽर्धर्चे याज्यायै वसाहोमं जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय स्वाहेति । वषट्कृते हविर्जुहोत्येतस्य होममनु प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्यः स्वाहेत्यथ प्रदक्षिणमावृत्य पृषदाज्यात् स्रुवेणोपघ्नन्नाह वनस्पतये ऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथ समावपमान आहाग्नये स्विष्टकृते ऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा होत्र इडामुपोह्यच्छन्ते मेदस । उपहूतायामिडायामग्नीध आदधाति षडवत्तमर्धवनिष्टुमथार्धवनिष्टुं । मेदस्वत्प्राश्नन्ति । मार्जयन्ते । ऽथाह ब्रह्मणे वक्षः परिहरेति । तद्ब्रह्मा प्रतिगृह्णाति ॥ ९ ॥

वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तो अशीमहीत्यथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहरन्त्येताञ्छामित्रादौपयजानङ्गाराꣳस्तानग्रेण होतारं निवपत्युपसीदत्युपयष्टा गुदतृतीयेनाथाध्वर्युः पृषदाज्यं विहत्य[2] जुह्वाꣳ

१ Thus B Be; धारयं तिष्ठति H; the other MSS. corrupt.

२ Thus H T; विहृत्य B Be; विहरत्य F.

समानीयात्याक्रम्याश्राव्याह देवेभ्यः प्रेष्येति । वषट्कृते जुहोति प्रेष्य प्रेष्येत्येवमेवोपयष्टोपयजति गुदस्य प्रच्छेदꣳ समुद्रं गच्छ स्वाहेत्येतैरेकादशभिरग्निं वैश्वानरं गच्छ स्वाहेति सर्वमन्ततोऽनुप्रहरत्यथ बर्हिषि हस्तौ निमार्ष्ट्यद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छेत्यथास्य धूममन्वीक्षते तनूं त्वचं पुत्रं नप्तारमशीयेत्येकादशानूयाजानिष्ट्वोदङ्ङत्याक्रम्य जुह्वाꣳ स्रुवमवधाय पुरस्तात्प्रत्यङ् तिष्ठञ्जुहोति दिवं ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहेत्यथ यथायतनꣳ स्रुचौ सादयित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति । शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[1] विमुच्य जाघन्या पत्नीः संयाजयन्त्याज्यस्यैव सोमं च त्वष्टारं च यजत्युत्तानायै जाघन्यै देवानां पत्नीर्यजति । नीच्या[2] अग्निं[2] गृहपतिमुत्तानायै जाघन्यै होत्र इडामवद्यति । नीच्या[2] अग्नीधे[2] षडवत्तं । प्राश्नीतो । मार्जयेते । अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं कृत्वा[3] न फलीकरणहोमेन चरत्यथ प्राङेत्य ध्रुवामाप्याय्य त्रीणि समिष्टयजूꣳषि[4] जुहोति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहेति । स्रुवेणैव द्वितीयमेष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहेति । स्रुचा

---

१ स्रुचो Be H.

२ Thus only Be ; the other MSS. have नीच्याग्निं and नीच्याग्नीधे ।

३ जुहोति B Be.

४ T ins. पञ्चसन्धिकानि।

तृतीयं देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युदूहति स्रुचमथ याचति स्फ्यमुदपात्रꣳ हृदयशूलमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्याग्रेण यूपꣳ स्फ्येनोद्धत्यावोक्ष्य शुष्कस्य चार्द्रस्य च सन्धौ हृदयशूलमुद्वासयति ॥ १० ॥

शुगसि तमभिशोच यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाद्भिर्मार्जयन्ते धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्चेत्यथाप्रतीक्षमायन्ति वरुणस्यान्तर्हित्यै प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमहीत्येत्याहवनीये ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यथौपयजिके[1] ऽग्नौ बर्हिरुपोषति यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामीत्यथाञ्जलिनोपस्तीर्णाभिघारितान्सक्तून्प्रदाव्ये जुहोति विश्वलोप विश्वदावस्य त्वासञ्जुहोमि स्वाहेति । हस्तौ प्रध्वꣳसयते ऽग्धादेको ऽहुतादेकः समसनादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति द्वितीयं जुहोति यान्यपामित्यान्यप्रतीत्तान्यस्मि यमस्य बलिना चरामि । इहैव सन्तः प्रति तद्यातयामो जीवा जीवेभ्यो निहराम एनत्स्वाहेति

१ Corrected acc. to Bh.; °थोपयजिके MSS.

हस्तौ प्रध्वꣳसयते ऽग्धादेको ऽकृतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमिति' तृतीयं जुहोत्यनृणा अस्मिन्ननृणाः परस्मिꣳस्तृतीये लोके अनृणाः स्याम। ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आक्षीयेम स्वाहेति' हस्तौ प्रध्वꣳसयते ऽग्धादेको ऽकृतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यमित्यथ देवता उपतिष्ठते' ऽयं नो नभसा पुर इत्यग्निꣳ' स त्वं नो नभसस्पत इति वायुं' देव सꣳस्फानेत्यादित्यमथ यूपमुपतिष्ठत आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम्। बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेत्यथ पूर्वाग्निꣳ शकले समारोपयत्ययं ते योनिर्ऋत्विय इति' तं मध्यमे ऽग्नावपिसृजत्याजुह्वान उद्बुध्यस्वाग्न इति द्वाभ्यामथ[१]मध्यममग्निमुपसमाधाय मध्यमे ऽग्नौ पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति' पूर्णाहुतौ वरं ददाति' धेनुवरं[२] वानडुद्वरं[३] वा दद्यादिति ह स्माह बौधायनः' संतिष्ठते पशुबन्धः संतिष्ठते पशुबन्धः॥ ११॥ तृतीयः॥

॥ इति चतुर्थः प्रश्नः॥

---

१ अथ om B.

२ Thus BF; धेनू॰ H Be; धेनूं T.

३ Thus HTF; वानडुहंवरं B; वानडुद्वरं Be; comp. VII. 4 s. f.

वैश्वदेवहविर्भिर्यक्ष्यमाणो भवति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां। नक्षत्रप्रयोग इत्येक आहुरुदगयन आपूर्यमाणपक्षस्य पुण्याहे प्रयुञ्जीतेति। स उपकल्पयते त्रेणीꣳ शलली लोहितायसस्य च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रस्रुस्थालीस्तावन्ति मेक्षणानि द्वयं पयः पृषदाज्याय च[1] दधि हविरातञ्चनाय च त्रेधा बर्हिः संनद्धं तदेकधा पुनः संनद्धं[2] प्रसूमयं प्रस्तरमित्यथोपवसथीये [3]ऽहन्हिहविषमारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुꣳ। सा प्रसिद्धेष्टिः संतिष्ठते। ऽथास्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति। वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातर्हुते ऽग्निहोत्रे पुरापां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति। हविष्कृता वाचं विसृजते। समानं कर्माधिवपनादध्युप्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपदधात्यथोत्तरतस्तिरः पवित्रमप आनीय सौम्याय चरवे ऽधिश्रयत्यथोत्तरतः सावित्राय द्वादशकपाला-

---

१ T F om.

२ J recommences with द्धं प्रसूमयं।

३ हवि Be J F H.

न्युपदधात्यथोत्तरतस्तिरः पवित्रमप आनीय सारस्वतपौष्णाभ्यामधिश्रयत्यथोत्तरतो मारुताय सप्त कपालान्युपदधात्यथोत्तरतस्तिरः पवित्रं पय[१] आनीयामिक्षाया अधिश्रयत्यथोत्तरतो द्यावापृथिव्यमेककपालमुपदधात्यभीन्धते कपालान्युपेन्धते चरुस्थालीः । कृतानि पिष्टानि समुप्य संयुत्याथाधिपृणक्त्याग्नेयमष्टाकपालं । तिरः पवित्रꣳ सौम्ये[२] चरव्यानावपत्यथाधिपृणक्ति सावित्रं द्वादशकपालं । तिरः पवित्रꣳ सारस्वतपौष्णयोश्चरव्यानावपत्यथाधिपृणक्ति मारुतꣳ सप्तकपालं । तिरः पवित्रं तप्ते पयसि दध्यानयति । सामिक्षा भवति । तां य एव कश्च[३] कुशलः परीन्धेन श्रपयित्वा विवाजिनां कृत्वाप्रतापे निदधात्यथाधिपृणक्ति द्यावापृथिव्यमेककपालमिति । त्वचं पुरोडाशानां ग्राहयित्वा श्रपयित्वाभिवास्य प्राङ्क्त्याप्येभ्यो निनीय स्तम्बयजुर्हरति । ॥ १ ॥

इदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वं परिग्राहं परिगृह्णाति । करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीꣳ संनह्याज्येन च[४] दध्ना चोदेहीत्याहृतासु प्रोक्षणीषूदस्य स्फ्यं

१ Thus Be Keś. पवित्रमप the other MSS.

२ Thus J F Keś. ; सौम्यस्य B Be H ; सौम्येयश्चरव्यान् T.

३ कश्चन Be. कश्चित् F.

४ B H om.

मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यग्रहणीं । पत्नीं संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं पृषदाज्यवन्त्याज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रसूमयं प्रस्तरं गृह्णाति । त्रिविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति । विधृती तिरश्ची सादयति । विधृत्योः प्रसूमयं प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यानुपूर्वं[1] हवींष्युद्वासयत्युपस्तीर्णाभिघारितान्पुरोडाशानभिघार्य चरून्प्रसिद्धमा मारुतादथ कंसे वा चमसे वामिक्षां व्युद्धृत्य वाजिनमानीयाभिघारयत्यथैककपालमुद्वास्य बह्वानीयाविःपृष्ठं करोत्यथैतानि संपरिगृह्यान्तर्वेद्यासादयति भूर्भुवः सुवरित्येताभिर्व्याहृतीभिरुत्करे वा विशये वा वाजिनमथ निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति[2] । प्रहृत्याभिहुत्य । ॥ २ ॥

अथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं । परि समिधं भिनष्टि । वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति । संमृष्टे स्रुग्भ्यामुत्तरमथासंस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा ध्रुवां समज्य

---

१ ॰पूर्व्यं Be H F.

२ प्रचरति Be B; in the following khaṇḍa B has consequently प्रचं ।

सादयित्वा स्रुचौ प्रवरं प्रवृणीते । प्रसिद्धꣳ होतारं वृणीते । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति । वषट्कृते जुहोति यज यजेति चतुर्थाष्टमयोः समानयमानो । ऽष्टमे सर्वꣳ समानयते । नव प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सꣳस्रावेणानुपूर्वꣳ[1] हवीꣳष्यभिघारयत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथानुपूर्वꣳ[1] हविर्भिश्चरति । प्रसिद्धमा मारुता । द्विश्वेभ्यो देवेभ्यो ऽनुब्रूहि विश्वान्देवान्यजेत्यामिक्षया चरत्, पाꣳश्चैककपालेन चरति द्यावापृथिवीभ्यामनुब्रूहि द्यावापृथिवी यजेत्यथ स्विष्टकृता चरत्यथैतानि मेक्षणान्याहवनीये ऽनुप्रहरत्यथैनानि सꣳस्रावेणाभिजुहोत्यथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यति । ॥ ३ ॥

उपहूतायामिडायामग्नीध आदधाति षडवत्तं । प्राश्नन्ति । मार्जयन्ते । ऽथाह ब्रह्मणे प्राशित्रं परिहरेति । परि प्राशित्रꣳ हरन्त्यथान्वपो ऽनु वेदेन ब्रह्मभागमथान्वाहार्यं याचति । तस्मिन्प्रथमजं वत्सं ददात्युद्वासयन्त्येतद्धविरुच्छिष्टमासादयन्ति वाजिनमथ संप्रैषमाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथाध्वर्युः पृषदाज्यं विहृत्य[2] जुह्वाꣳ समानीयात्याक्रम्याश्राव्याह देवान्यजेति । वषट्कृते जुहोति यज यजेति नवानूयाजानिष्ट्वोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ साद-

१ Thus Keś. ; •पूर्व्यꣳ the MSS.

२ Thus T Be H F Keś. ; विहृत्य B.

यित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति । शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्याथ कꣳसं वा चमसं वानाज्यलिप्तं याचति । तमन्तर्वेदि निधाय तस्मिन्बर्हिषि विषिञ्चन्वाजिनमानयन्नाह वाजिभ्यो ऽनुब्रूहीत्यत्याक्रम्याश्राव्याह वाजिनो यजेति । वषट्कृते जुहोति वाजिभ्यः स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षꣳ । स यावन्त ऋत्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति यन्मे रेतः प्रसिच्यते यन्म आप्यायते यद्वा जायते पुनः । यद्वा मे प्रतितिष्ठति तेन मा वाजिनं कुरु तेन मा रेतस्विनं कुरु तेन मा शिवमाविश तस्य ते वाजिपीतस्य वाजिभिः पीतस्येति वा मधुमत उपहूतस्योपहूतो भक्षयामीति । निर्णिज्य पात्रं प्रयच्छत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि[1] समिष्टयजूꣳषि जुहोति यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथ पूर्णपात्रविष्णुक्रमैश्चरित्वा विसृजते व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपत ऋतमेव परमेष्ठ्यृतं नात्येति किं चन । ऋते समुद्र आहित ऋते भूमिरियꣳ श्रिता ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं वैश्वानरस्य तेजसा ॥ ऋतेनास्य निवर्तये

---

१ Thus H B Be T J; पाशुकानि F.

सत्येन परिवर्तये। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये॥ शीर्ष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते वैश्वदेवहवीꣳषि संवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशास्ते॥ ४॥ प्रथमः॥

अथातश्चतुर्षु मासेषु वरुणप्रघासहविर्भिर्यक्ष्यमाणो भवति स उपकल्पयते श्येणीꣳ शललीं लोहितायसस्य च क्षुरं चतुष्टयानि पुरोडाशकपालानि पञ्च चरुस्थालीस्तावन्ति मेक्षणानि द्वयं पयः पृषदाज्याय च[1] दधि हविरातञ्चनाय च[1] शमीपर्णकरीरसक्तूनैषीकꣳ शूर्पं मनागुपतप्तानां यवानामवाञ्जनपिष्टानां प्रतिपूरुषं[2] करम्भपात्राण्येकातिरिक्तानि भवन्ति तेषामेव मेषीं च मेषं च कुर्वन्ति शृङ्गवान्मेषो भवत्यशृङ्गा मेषी तौ शुक्लाभिरूर्णाभिः संप्रच्छन्नौ भवतो द्वावध्वर्यू द्वयानि यज्ञपात्राणि द्वयमिध्माबर्हिर्द्वे वेदी तयोः पांशुवल्मिकीवोत्तरा दार्शपौर्णमासिकीव दक्षिणा ते पश्चात्समे पुरस्ताद्विषमे पृथमात्राद्वेदी असंभिन्ने भवतो ऽथास्यैतदहर्दया वत्सा अपाकृता भवन्ति मरुद्भ्यो वरुणायेति द्वयं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातर्हुते ऽग्निहोत्रे पृष्ठ्याꣳ स्तीर्त्वापः प्रणीय निर्वपत्याग्नेयमष्टाकपाल-

[1] Thus (च ... च) Be H T (दधि च the last); the first च om. JF, the last B.

[2] Thus (with ऊ) BTH, comp. T Br. I. 6. 4. 5; with उ the other MSS.

मिति पञ्च संचराण्यैन्द्राग्नमेकादशकपालं[1] मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालमिति । हविष्कृता वाचं विसृजते । समानं कर्मा पर्यग्निकरणादथैतानि करम्भपात्राण्यभिपर्यग्निकुर्वन्ति मेषीं च मेषं च शमीपर्णकरीरसक्तूनैषीकꣳ शूर्पमिति । त्वचं पुरोडाशानां ग्राहयित्वा श्रपयित्वाभिवास्य प्राङ्गत्याग्नेभ्यो निनीय स्तम्बयजुषी हरतो । ऽध्वर्युरेवोत्तरस्यां वेद्याꣳ हरति प्रतिप्रस्थाता दक्षिणस्यां । तयोर्हरतोरध्वर्युः पूर्व एति पुनरायतोः प्रतिप्रस्थाता पूर्व एतीदमेव प्रसिद्धं पौरोडाशिकं । त्रिर्यजुषा तूष्णीं चतुर्थं । पूर्वौ परिग्राहौ परिगृहीतो । ऽध्वर्युरेव करणं जपत्युद्धत । उद्धताभ्यामाग्नीध्रस्त्रिर्हरति[2] । यदाग्नीध्रस्त्रिर्हरत्यध्वर्युरेव चात्वालस्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्याग्नेरावृता द्वावग्नी[3] प्रणयतो । ऽध्वर्युरेवोत्तरस्यां वेद्यामग्निं निधायाध्वराहुतिभिरभिजुहोति । प्रतिप्रस्थाता दक्षिणस्यामग्निं निधायाभिजुहोति तूष्णीमग्निवत्युत्तरौ परिग्राहौ परिगृह्य योयुपित्वा तिर्यञ्चौ स्फ्यौ स्तब्ध्वाध्वर्युरेव संप्रैषमाह प्रोक्षणीरासादयतमिध्माबर्हिषी उपसादयतꣳ स्रुवौ च स्रुचश्च संमृष्टं तूष्णीं पृषदाज्यग्रहणीं पत्नीꣳ संनह्याज्याभ्यां च दध्ना चोदेतमित्याहृतासु प्रोक्षणीषूदस्य स्फ्यौ मार्जयित्वेध्माबर्हिषी उपसाद्य

१ Thus, with स्व, Be JHF, Bh., Keś.; संचाराणि B T.

२ Thus Be J; उद्धत्योद्धताभ्याम॰ T; उद्धत om. B H; उद्धन्त्युद्धताद॰ F.

३ Thus J H; द्वावग्नि Be; T om. ग्नी; B om. द्वाव ।

प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रुत्य स्रुवौ च स्रुचश्च संमृष्टस्तूष्णीं[1] पृषदाज्यग्रहणीं । पत्नीꣳ संनह्याज्याभ्यां च दध्ना चोदेत । आज्ये च प्रोक्षणीश्चोत्पूय प्रसिद्धं पृषदाज्यवन्त्येवाज्यान्यध्वर्युरुत्तरस्यां वेद्यां गृह्णीते । दार्शपौर्णमासिकानि प्रतिप्रस्थाता दक्षिणस्याम् । ॥ ५ ॥

अथ प्रोक्षणीभिरुपोत्तिष्ठत[2] । इध्मौ प्रोक्षतो । वेदी प्रोक्षतो । बर्हिषी प्रोक्षतो । बर्हिषी आसन्ने प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरौ गृह्णीतः । पञ्चविधमेवाध्वर्युरुत्तरस्यां वेद्यां बर्हि स्तृणाति । त्रिविधं प्रतिप्रस्थाता दक्षिणस्यामथ प्रस्तरपाणी प्राञ्चावभिसृप्य कार्ष्मर्यमयान्परिधीन्परिधत्त । ऊर्ध्वाः समिध आधत्तो । विधृतीस्तिरश्चीः[3] सादयतो । विधृतीषु प्रस्तरौ । प्रस्तरयोर्जुह्वौ । बर्हिषोरितरा[4] । एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतो [5]दक्षिणत एवाध्वर्युरुत्तरतः प्रतिप्रस्थातानुपूर्वꣳ[6] हवीꣳष्युद्रासयत । आग्नेयप्रभृतीन्येवाध्वर्युरुद्रासयति प्रसिद्धमैन्द्राग्नान्मारुतीं प्रतिप्रस्थाता कꣳसे वा चमसे

१ Thus J only; the other MSS. mostly ०ष्टं ।

२ उपोत्तिष्ठात F.

३ Corrected. विधृतीस्तिरश्चः T; विधृत्यस्तिरश्चाः B; विधृत्यतिरश्च्यः Be; विधृत्यस्तिरश्चः H; विधृत्यास्तिरश्चाः F; विधृत्यस्तिरः J.

४ Thus B Be F T; इतरे H J.

५ The following words: दक्षिणत .... प्रतिप्रस्थाता are found only in B, but comp. S'rautapadārtha page 118.

६ आनुपूर्व्यꣳ H Be; आनुपूर्वेꣳ J; अनुपूर्व्यꣳ F; ०नुपूर्वꣳ B.

वामित्रां व्युद्धृत्य तस्यां मेषीमवदधात्यथास्यै शमीपर्णकरीरसक्तूनामित्रामित्युपवपति ' वाजिनमानीयाथाभिघारयति ' वारुणीमध्वर्युस्तथैव कꣳसे वा चमसे वामित्रां व्युद्धृत्य तस्यां मेषमवदधात्यथास्मै[1] शमीपर्णकरीरसक्तूनामित्रामित्युपवपति ' वाजिनमानीयाथाभिघारयति ' तथैककपालमुद्वास्य बक्कानीयाविःपृष्ठं करोत्यथैतानि संपरिगृह्यान्तर्वेद्यासादयत ' आग्नेयप्रभृतीन्येवाध्वर्युरुत्तरस्यां वेद्यामासादयति प्रसिद्धमैन्द्राग्नान्मारुतीं प्रतिप्रस्थाता दक्षिणस्यां ' वारुणीमध्वर्युरुत्तरस्यां कायं चैककपालं ' तथैवोत्करे वा विशये वा वाजिने ' अध्वर्युरेव[2] निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति ' प्रहृत्याभिजुहृत्य ' ॥ ६ ॥

अथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्याधत्त इध्मौ ' परि समिधौ शिनष्टो ' वेदाभ्यामुपवाजयतो ' ऽनूक्तासु सामिधेनीषु स्रुवाभ्यामाघारावाघारयतो ' ऽध्वर्युरेव संप्रैषमाहाग्नीदग्नीꣳस्त्रिस्त्रिः संमृड्ढीति ' संमृष्ट उत्तरो ऽग्निर्भवत्यसंमृष्टो दक्षिणो ' ऽथ प्रतिप्रस्थाता पत्नीं पृच्छति पत्नि कस्ते जार[3] इत्यमाविति ' तं वरुणो गृह्णात्विति निर्दिशति ' यञ्जारꣳ सन्तं न ब्रूयात्प्रियं ज्ञातिꣳ रुन्ध्यादसौ मे जार इति निर्दिशेन्निर्दिश्यैवैनं वरुणपाशेन ग्राहयतीति ब्राह्मणं चैतानि करम्भपात्राण्यभिपर्यग्निकृतान्येषीके शूर्पे समुप्य पत्न्यै

---

१ Thus T B ; अस्यै JF ; अस्य Be H.

२ Thus only T Be ; the other MSS. ध्वर्युरेव ।

३ जारा H F ( pluti ? )

प्रयच्छति' तानि पत्नी शीर्षन्नधिनिधत्ते' ऽथैनां दक्षिणया द्वारोपनिष्क्रमय्य[1] दक्षिणेनान्वाहार्यपचनं दक्षिणेनोभे वेदी परीत्य प्राचीमुदानयन्वाचयति प्रघास्यान्हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषस इत्यथ दक्षिणमग्निमग्रेण पुरस्तात्प्रत्यङ्मुखास्तिष्ठन्त्युत्तर एवाध्वर्युर्दक्षिणो यजमानो दक्षिणा पत्न्यथैतानि करम्भपात्राणि पत्नी यजमानाय प्रयच्छति' तानि यजमानः शीर्षन्नधिनिधत्ते' ऽथ पुरोऽनुवाक्यामन्वाह ॥ ७ ॥

मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया। मही ह्यस्य मीढुषो यव्या। हविष्मतो मरुतो वन्दते गीरित्युभौ याज्यां पत्नी च यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यच्छूद्रे यदर्य एनश्चकृमा वयम्। यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहेत्यथैतदैषीकꣳ शूर्पमग्नावनुप्रहरत्यपि वाग्निरभ्युह्य भुञ्जते' व्ययतो ऽध्वर्युरनुमन्त्रयते ऽक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा। देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानव इत्यथ प्रतिप्रस्थाता दक्षिणमग्निꣳ संमार्ष्ट्युभौ स्रुच्यावाघारावाघारयतो' ऽध्वर्युरेव प्रवरं प्रवृणीते' प्रसिद्धꣳ होतारं वृणीते' सीदति होता' प्रसवमाकाङ्क्षतः[2]' प्रसूतौ स्रुच[3] आदायात्याक्रम्याश्राव्याह समिधो यजेति' वषट्कृते जुहुतो यज यजेति चतुर्थाष्टमयोः समानयमानावष्टमे[4] ऽध्वर्युः सर्वꣳ

१ Thus Be H.T. Keś.; ०क्रामय्य F; ०क्रम्य T; ०क्रम्यैष्य B.

२ Thus Be BHJT; ०कांचति F.

३ स्रुचाव् Be.

४ Thus B Be HF (the last समानयसमानाव०); समानयमानोष्टमे TJ.

समानयते। परि प्रतिप्रस्थाता सꣳस्रावꣳ शिनष्ट्यनूयाजेभ्यो। नव प्रयाजानिष्ट्वोदङ्ङावृत्याक्रम्य सꣳस्रावाभ्यामानुपूर्वꣳ[1] हवीꣳष्यभिघारयत। आग्नेयप्रभृतीन्येवाध्वर्युरभिघारयति प्रसिद्धमैन्द्राग्नान्मारुतीं प्रतिप्रस्थाता। वारुणीमध्वर्युः कायं चैककपालमथाग्नये सोमायेत्याज्यभागाभ्यां चरतो। ऽथ प्रतिप्रस्थातोपरमत्यथाध्वर्युरानुपूर्वꣳ[2] हविर्भिश्चरति प्रसिद्धमैन्द्राग्नादथाध्वर्युरुपरमत्यथ प्रतिप्रस्थाता मारुत्या अवद्यन्नाह मरुद्भ्यो ऽनुब्रूहीति। प्रथमेनावदानेन शमीपर्णकरीरसक्तूनामिक्षाया[3] इत्यवद्यति। द्वितीयेनावदानेन शमीपर्णकरीरसक्तूनामिक्षां मेषीमित्यवदधात्यभिघारयति। प्रत्यनक्त्यत्याक्रम्याश्राव्याह मरुतो यजेति। वषट्कृते जुहोत्यथ प्रतिप्रस्थातोपरमत्यथाध्वर्युर्वारुण्या अवद्यन्नाह वरुणायानुब्रूहीति। प्रथमेनावदानेन शमीपर्णकरीरसक्तूनामिक्षाया[3] इत्यवद्यति। द्वितीयेनावदानेन शमीपर्णकरीरसक्तूनामिक्षां मेषमित्यवदधात्यभिघारयति। प्रत्यनक्त्यत्याक्रम्याश्राव्याह वरुणं यजेति। वषट्कृते जुहोत्युपाꣳश्वेककपालेन चरति कायानुब्रूहि[4] कं यजेत्यथ[5] स्विष्टकृता चरत। आग्नेयप्रभृतीनामेवाध्वर्युरवद्यति प्रसिद्धमैन्द्राग्नान्मारुत्यै प्रतिप्रस्थाता।

---

१ ॰पूर्व्यꣳ BJTF.

२ ॰पूर्व्यꣳ all.

३ Be F ins. अर्धम्। Are we to correct ॰सक्तूनामामिक्षाया ?

४ Thus BH. The other MSS. have इति after ॰ब्रूहि but see page 131, 9.

५ After कं यजेति Be F have वषट्कृते जुहोति।

वारुण्या अध्वर्युराग्नयादेककपालस्य च । द्विरभिघारयतो । न प्रत्यङ्ङो[1] । ऽत्याक्रम्याश्राव्याहाग्निꣳ स्विष्टकृतं यजेति । वषट्कृत उत्तरार्धपूर्वार्धयोरतिहाय पूर्वा आहुतीर्जुहुतो । ऽथैतानि मेक्षणान्याहवनीययोरनुप्रहरतो[2] । ऽथैनानि सꣳस्रावाभ्यामभिजुहुतो । ऽथोदङ्ङावत्याक्रम्य यथायतनꣳ स्रुचः[3] सादयित्वा प्राशित्रमवदायेडामवद्यत । आग्नेयप्रभृतीनामेवाध्वर्युरवद्यति प्रसिद्धमैन्द्राग्नान्मारुत्यै प्रतिप्रस्थाता । वारुण्या अध्वर्युराग्नयादेककपालस्य[4] चाभिघारयत्यथ प्रतिप्रस्थातोत्तरां वेदिमुपसर्पति[5] । ॥ ८ ॥

उपहूतायामिडायामग्नीध आदधाति षडवत्तं । प्राश्नन्ति । मार्जयन्ते । ऽथाह ब्रह्मणे प्राशित्रं परिहरेति । परि प्राशित्रꣳ हरन्त्यन्वपो ऽनु वेदेन ब्रह्मभागमथान्वाहार्यं याचति । तस्मिन्यथाश्रद्धं ददात्युद्वासयन्त्येतद्धविरुच्छिष्टमासादयन्ति वाजिने । अध्वर्युरेव संप्रेषमाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथाध्वर्युः पृषदाज्यं विहृत्य जुह्वाꣳ समा-

---

१ Thus B only ; प्रत्यनञ्चो Be FH ; प्रत्यनञ्चौ T. (grantha) ; J प्रत्यनञ्चि If the dual प्रत्यनञ्चः should be the correct reading, we would have a grammatical form of the same kind as श्रिनष्टः (supra page 136, 12) instead of शिꣳष्टः ।

२ Thus T and Bh. ; the other MSS. चाहवनीये ( Be चाहवनीयो ) ।

३ Thus F ; the other MSS. स्रुचौ ।

४ Thus HJ ; ०कपालस्याचाभि० the other MSS. except Be, which has ०कपालस्याग्नयाचाभि० ।

५ Thus BTHF ; उपसꣳसर्पति Be J. and Bh. .

नीयात्याक्रम्याश्राव्याह देवान्यजेति । वषट्कृते जुह्वतो यज यजेति नवानूयाजानिष्ट्वोदञ्चावत्याक्रम्य यथायतनꣳ स्रुचः[1] सादयित्वा वाजवतीभ्याꣳ स्रुचौ[1] व्यूहतः । शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ[2] विमुच्य । तथैव कꣳसौ वा चमसौ वानाज्यलिप्तौ याचतः । समानौ वाजिनयोस्सर्वाध्वर्युरेव प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूꣳषि जुहोत्येकं प्रतिप्रस्थाता दार्शपौर्णमासिकं दक्षिणे । ऽथ पूर्णपात्रविष्णुक्रमैश्चरित्वा न विसृजते व्रतमथ याचत्याज्यस्थालीꣳ सस्रुवाꣳ स्रुचं बर्हिः प्रतिवसनीये वाससी वारुण्ये निष्कासं तुषानित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्यन्तरेण[3] चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तद्यन्ति । प्रसिद्धो ऽवभृथः । साम चैव नाह देवीराप एष वो गर्भ इति चाथाप्रतीचमायन्ति वरुणस्यान्तर्हित्यै । प्रपथे समिधः कुर्वत एधो ऽस्येधिषीमहीत्यैत्याहवनीये[4] ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्येव

१ Thus Be H; the dual both times in TFJ; B. has the first time the plural, the second time the dual.

२ Thus B Be HJ; स्रुचो TF.

३ Thus passage याहेहि ... नूची पत्नी found thus only in B Be TH; J. has only याहेहि यजमानेति; F omits the words altogether.

४ Thus HF; ०त्येताहवनीये BJ.

विसृजते व्रतमथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते यद्घर्मः पर्यवर्तयदन्तान्पृथिव्या दिवः। अग्निरीशान ओजसा वरुणो धीतिभिः सह। इन्द्रो मरुद्भिः सखिभिः सह॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा। शिरस्तपस्याहितं वैश्वानरस्य तेजसा। ऋतेनास्य निवर्तये सत्येन परिवर्तये। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये॥ शीर्ष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात्संतिष्ठन्ते वरुणप्रघासहवीꣳषि' परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशास्ते' ॥ ९ ॥ द्वितीयः ॥

अथातश्चतुर्षु मासेषु साकमेधहविर्भिर्यक्ष्यमाणो भवति' स उपकल्पयते त्रेणीꣳ शललीं लोहितायसस्य च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रश्चरुस्थालीस्तावन्ति मेक्षणानि पृषदाज्याय दध्यथ पौर्णमास्या उपवसथेऽग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता' सा प्रसिद्धेष्टिः संतिष्ठते' ऽथ मध्यंदिने मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति' सा प्रसिद्धेष्टिः संतिष्ठते' ऽथास्यैतदहर्मरुद्भ्यो गृहमेधिभ्यो वत्सा अपाकृता भवन्त्यथ सायꣳ हुतेऽग्निहोत्रे सर्वासां दुग्धे गार्हपत्ये गृहमेधीयं चरुꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंभिन्दन्निवोद्धरति' सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयान्तर्वेद्यासादयत्यथाग्नये सोमायेत्याज्यभागाभ्यां

चरत्यथोपस्तीर्य पूर्वार्धाच्चरोरवद्यन्नाह मरुद्भ्यो गृहमेधिभ्यो ऽनुब्रूहीति । पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति । प्रत्यनक्त्यत्याक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति । वषट्कृते जुहोत्यथ स्विष्टकृता चरतीडान्तो गृहमेधीयः संतिष्ठते । पूर्णदर्व्याय[1] क्षामकाषं परिशिनष्टि । प्रतिवेशꣳ स्त्रीकुमारेभ्यः पचन्त्याशिता भवन्त्याञ्जते । ऽभ्यञ्जते । ऽनु वत्सान्वासयन्ति । सवात्योरेवैताꣳ रात्रिं वत्सं बध्नन्त्यथाध्वर्युरपररात्र आहुत्य नित्यवत्सायै पयसाग्निहोत्रं जुहोत्यथैतां दर्वीं निर्णिज्योपस्तीर्य तस्यामेतꣳ सर्वश एव क्षामकाषमवदधाति । द्विरभिघारयत्यथ पुरोऽनुवाक्यामन्वाह पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो इति । यजति देहि मे ददामि ते नि मे धेहि नि ते दधे। निहारमिन्नि मे हरा निहारं निहरामि ते स्वाहेत्यृषभ[2] एहीत्यृषभस्य रवथे[3] जुहुयाद्ब्रह्मणो हिंकार[4] इत्येतदपरं । गार्हपत्ये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीय मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यता । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ तदानीमेव पृष्ठ्याꣳ स्तीर्त्वापः प्रणीय

---

१ पौर्णदर्व्यार्थं Be.

२ स्वाहा om TF.

३ Thus H; रवये F; रवते BT; रवे Be J; Comp. Journ. Germ. Or. Soc. LII, p. 429.

४ Thus B Be F; ब्रह्मणोभिहिंकार H; ब्रह्मणोवाहिंकार J; ब्राह्मणोपाश्च-हिंकर T.

क्रम्य स्वरुशाखैः पशून्समनक्ति । त[1] एते[1] नानादेवत्याः पशवो नानास्वरवो नानाशाखा अथैते समानदेवत्याः पशवः समानस्वरवो नानाशाखाः[2] । समानं कर्म पर्यग्निकरणादथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते । तेषाꣳ सारस्वत्युत्तरार्ध्या भवत्याग्नेय उपचारत[3] । आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते । पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्त[4] । आग्नेयायैवाध्वर्युः पशवे निहन्यमानाय बर्हिरुपास्यति पृथगितरेभ्यस्तत इतरान्प्राचो वोदीचो वा निघ्नन्त्यकृण्वतो मायून्संज्ञपयतेत्युक्त्वैतेनैव यथेतमेत्य पृषदाज्यावकाश आसत इह प्रजा[5] विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माꣳ अवन्तु पयसा घृतेनेति । संज्ञप्तान्प्राहुर्जुहोति संज्ञप्ताहुतिं यत्पशवो मायूनकृषतेत्यथाभ्यैति[6] शमितार उपेतनेति । पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयतेऽदितिः पाशान्प्रमुमोक्त्वेतानिति । पृथगविशाखाभिरुपसृज्येमां दिशं निरस्यत्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानिति । ॥ ४ ॥

---

१ Thus M Tr Be 11 HF; अथैवे B Be U (sec. m.).

२ समानाशाखाः M.

३ उपचरत M Tr U.

४ Thus M Be 11 UHF; °ानुपूर्व्यम° Be B Tr.

५ Thus (cp. Vol. I., p. 118, 1) Be 11 F; पशवो M Tr Be UH Keś.; Āp. (vii. 17. 1) has also पशवो but the fem. घृताचीः (घृताच्य Tr F) points to प्रजाः, cp. also Maitr. S. iv. 2. 10.

६ Thus all exc. B (: अभ्येति).

अथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्य मानुपूर्वं[1] पशूनां प्राणानाप्याययत्यन्वगध्वर्युर्वपा उत्खिदन्नेत्याग्नेयस्यैवाध्वर्युर्वपया[2] प्रथमया प्रतिपद्यते ऽनूचीरितरा आहरन्त्याग्नेयस्यैव वपायै प्रतितप्यमानायै बर्हिषो ऽग्रमुपास्यत्युपेतरा यच्छन्त्याग्नेयस्यैव वपाꣳ स्रुवाहुत्याभिजुहोत्युपेतरा यच्छन्त्यथ स्वाहाहुतिप्रैषेण चरित्वा सꣳस्रावेण पृषदाज्यमभिघार्याग्नेयस्यैव वपामभिघारयत्युपेतरा यच्छन्त्यथ पुरस्तात्स्वाहाहुतिꣳ स्रुवाहुतिꣳ हुत्वाथैतेषां नानादेवत्यानां पशूनामनुब्रूहि प्रेष्येति वपाभिश्चरत्यथैतेषाꣳ[3] समानदेवत्यानां पशूनां मुख्यस्य वपाꣳ समवलुम्पन्नाह प्रजापतय इत्युपाꣳशु छागानां वपानां मेदसो[4] ऽवदीयमानस्यानुब्रूहीत्युच्चैर्यावतीः[5] स्रुक्त्वंभवत्यथेतराः[6] पात्र्या वेडसूनेन वोपोद्यच्छन्ते द्विरभिधारयत्यत्याक्रम्याश्राव्याह प्रजा-

---

१ Thus Tr B Be F; मानुपूर्व्यं U Be 11 H; उत्थाप्यानुपूर्व्यं M.

२ Thus (उत्खिदन्नेति) Tr; उत्खिदंनेति M Be; उत्खिदंतेति B; उत्खिदति or उद्धरति the other MSS.; Bhav.: उद्धरन्गच्छति।

३ चरित्वाथै॰ Tr Be B.

४ मेदसोवदीयमानस्य Tr Be (pr. m.) BF; ॰वदीयमानानाम॰ Be 11 U; H is partly corr. but reads स्ववदीयमानस्य; M pr. m. gen. sing., sec. m. (not wholly certain) gen. plur. of the part.; मेदसोवदीयमानानाम॰ Be 11 U Keś; वपानां मेदसामवदीयमानानाम॰ Be (sec. m.).

५ यावतीः (sc. वपाः?) M Be 11 U; यावत् Be B; यावति Tr.

६ Thus only Tr, cp. xv. 31. स्रुक्स्थांभवति U H; स्रुकर्थंभवति F; स्रुवसंस्थभवति B; स्रुक्तंभवति M; स्रुकस्थंभवति Be 11 Be.

पतय इत्युपांशु छागानां वपा[1] मेदः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते वपा[2] जुहोत्युपांशु सारस्वत्यै वपया [3]चरत्यथोपरिष्टात्स्वाहाकृतिꣳ स्रुवाकृतिꣳ कृत्वा वपाश्रपणीरनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते। ऽथ पशून्विशास्ति[4] शमितरित्याह यन्माहत्या अनवदानीयं तदभ्यधाच्छृपयतादित्यथ[5] सावित्रꣳ कृत्वा प्रसर्पन्ति प्रातःसवनाय। तदृजुधा संतिष्ठते। ॥ ५ ॥ द्वितीयः ॥

अथ सावित्रꣳ कृत्वा प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वारावित्यत एवोर्ध्वेन। संप्रसृप्तान्विदित्वाध्वर्युः प्राङायन्नाह चात्वाले रथचक्रं निमिनुत रथवाहने रथमाधत्ताश्वान्पल्पूलयत यद्दास्यन्नषि[6] तद्दक्षिणत उपस्थापयाभिषोतार[7] एत कृयत ग्रावस्तुतमेहि यजमानेति। प्रसिद्धो ऽभिषवः। प्रसिद्धं ग्रहा गृह्यन्ते। समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा षोडशिन-

---

१ वपा Be 11 HF; वपानां M Tr Be B.

२ वपा om. all exc. Be B.

३ प्रचरत्य॰ B Be H.

४ विशाधीति Be U (sec. m.); विशाधिति B; विशास्ति the other MSS. (also U pr. m.).

५ Thus Be 11 (sec. m.); तदर्धाच्छ्॰ M; तदभ्यर्धाश्र॰ Tr; तदप्यद्धाच्छ्॰ Be 11 (pr. m.); तपघ्यशा(?)श्र॰ H; the other MSS. corr.; Bhav. seems to have read अप्यर्धात्; the meaning is पृथक्।

६ Thus U Be 11 H; ददास्यन्नषि F; येददास्यो B; यद्दास्यो Be, यद्दास्य (broken off) भितोदच्चिण॰ M; यद्दास्यो Tr; after षषि H ins. वेदेर्, Be B: मार्जालीये, Tr: मार्जालीयं; these MSS. om. तद्।

७ Thus Be 11 UHF; ॰स्थापयताभि॰ M Tr B Be.

मभिगृह्णातीन्द्रमिद्धरी वहत इत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि होष्यन्नाचत्वाज्यस्थालीꣳ सस्रुवाꣳ स्रुचं वासस्तस्यैतस्य वसनस्यान्तमायां दशायां निष्करज्जुः प्रग्रथिता[१] भवत्येतत्समादायाहैहि[२] यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण[३] सदः परीत्याग्रेण शालां तिष्ठते[४] प्रतिप्रस्थात्र एतानि शस्त्राणि प्रयच्छत्यथाहैहि यजमानेति । रथ एष दक्षिणे श्रोण्यन्ते रथवाहन आहितो भवति । तमुपावहरतीन्द्रस्य[५] वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादित्यथैनं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयन्ति[६] वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषदित्यथाप्स्वश्वान्पल्पूलयत्यप्स्वन्तरमृतमप्सु[७] भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिन इत्यथ दक्षिणं योग्यं युनक्ति वायुर्वा त्वा मनुर्वा त्वा

१ Thus Be 11 UF, Bhav., Keś.; ॰थितो the other MSS.

२ भवतीत्येत॰ M Tr.

३ पर्याहृत्य i. s. o. परीत्य Be B.

४ तिष्ठन् M; तिष्ठति F; तिष्ठते the other MSS.

५ Thus Tr Be 11 Be BU (sec. m.); pluralis verbi the other MSS.; अवतारयति Bhav. Keś.

६ Thus M Tr U (pr. m.); अभ्यावर्तयंति Be BTU (sec. m.). अवर्तयति H; प्रवेशयंति Keś.; cf. infra xii. 7 (p. 95, l. 10).

७ The first अप्सु om. MH.

गन्धर्वाः सप्तविंशतिः । ते अग्रे अश्वमयुञ्जन्ते अस्मिञ्जवमादधुरित्यथास्य पृष्ठं सम्मृज्यते ऽपां नपादाशुहेमन्य ऊर्मिः ककुद्मान्प्रतूर्तिर्वाजसातमस्तेनायं वाजं सेदित्येवमेवोत्तरं योग्यं युनक्ति । तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति । तयोरेवमेव पृष्ठे[१] सम्मृज्यत । एतस्य योगमनु सर्वमाणिवद्युज्यते । ऽधिकक्ष्यान्हस्तिनः कुर्वन्ति । प्रवेष्टयन्ति वासोभारान्वसनानां दशासु निष्करज्जूः प्रग्रथ्नन्ति । पूगशो दक्षिणा आयातयत्यथ सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति । नयवत्यर्चाग्नीध्रे जुहोति[२] । सृज्यन्ते[२] दक्षिणा दक्षिणापथेन । स यत्किंचिद्ददाति[३] हिरण्यमुखमेव ददात्यथ वासांस्यथ[४] युक्तानि गोअश्वं हस्तिपुरुषमन्ततो[५] । ऽदत्ता एवैते रथा अतिवर्तन्ते । नैते ऽन्यस्य सन्त आजिं धावन्ति । मनसैव स्वरथमध्वर्यवे ददाति मनसा समनुदिश्य[६] दक्षिणास्त्रिभिर्मरुत्वतीयैश्चरति । सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[७] माहेन्द्राय । ॥ ६ ॥

---

१ पृष्ठे M Tr Be U; पृष्ठं BFH.

२ Thus M Tr Be 11 HF; जुहोत्युत्सृज्यंते Be B; जुहोति सृज्यंति U.

३ यत्किंचद० Tr.

४ Thus Tr HF; Be B असमाप्ति i.s. of अथ; M (injured): अथवा ...सि ददाति अथ युक्ता अनो ।

५ Before पुरुष० Tr F ins. दास०, H दासी; Bhav.: हस्तिपुरुषम्; cf. infra xii. 7.

६ समनुदिश्य UH Be 11; समुद्दिश्य M Tr Be B; सनुदिश्यं F.

७ Thus, with पा, all, also Keś. but Be sec. m. ०पालंबम० ।

अथ याचति नैवारꣳ सप्तदशशरावꣳ। स एष क्षीरे शृतो भवति। तेन चरति[1] बृहस्पतये ऽनुब्रूहि बृहस्पतिं यजेति। तमनिष्टस्विष्टकृतमपिधाय प्रज्ञातं निदधात्यथास्यैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन समुदायुतं भवति। तस्यौदुम्बरेण स्रुवेणोपघातꣳ सप्तान्नहोमाञ्जुहोति वाजस्येमं प्रसवः सुषुवे अथ इत्यभिषेकाय परेकं परिश्रिनष्ट्यथैनमपिधाय प्रज्ञातं निदधात्यथ पुरस्तादभिषेकस्य षट् पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य सर्वौषधेन पुरस्तात्प्रत्यञ्चमभिषिञ्चति। शीर्षतो ऽभिषिञ्चत्या मुखादन्ववस्रावयति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा[2] साम्राज्येनाभिषिञ्चामि[2] बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीति। समुन्मृष्टे समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता वाजपेयेनेत्यथ भूर्भुवः सुवरिति वाचं विसृजते। द्वाभ्यां मुखं विमृष्टे। गायत्राग्निविष्णुक्रमाक्रमते[3]। ऽथोपरिष्टादभिषेकस्य षट् पार्थानि जुहोती-

---

१ प्रचरति Be B.

२ Tr Be B U (sec. m.) om.; M places बृहस्पतेस्त्वा etc. befor[e] इन्द्रस्य त्वा।

३ Thus Tr U Be 11 H F; गायत्र्यावि° M Be B.

न्द्राय स्वाहा घोषाय स्वाहेति । द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यथैतस्य बार्हस्पत्यस्य स्विष्टकृता चरत्यथैनमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्तरत[1] एते[2] रथा युक्तास्तिष्ठन्ति[3] । तदेतान्यजुर्युजो ऽश्वानवघ्रापयति वाजिनो वाजजितो वाजँ सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमवजिघ्रतेत्यथैनमपिधाय प्रज्ञातं निदधात्यथ रथमभिप्रैति विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीत्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं यावितिः[4] । रथमातिष्ठति देवस्याहँ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्येतस्मिन्काले चात्वाले रथचक्रं निमितं ब्रह्मारोहति । तमत[5] एवानुमन्त्रयते देवस्याहँ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाकँ रुहेयमित्यथ यजमानमन्वास्थायोज्जितीर्वाचयत्यग्निरेकाक्षरेण वाचमुदजयदिति सप्तदशायास्मा अश्वाजनीं[6] प्रयच्छत्यश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्त्समत्सु वाजयेति । तया यथायुक्तमश्वान्क्षिप-

---

१ •क्रामंत्यु• M U Be 11 Bo Be (pr. m.); •क्रामत्यु• Tr Be (sec. m.) Bhav., Keś.

२ एवैते Tr Be 11 U.

३ युक्तास् om. Be B.

४ Tr Be B ins. अथ ।

५ अयस्य i.s.o. अत M.

६ Thus Be 11 U F, Keś., Bhav. (one copy); अश्वाजनिं Tr; अश्वाजनी M; अश्वाजिनिं Be; अश्वाजिनं B; अश्ववाजिनीं H.

त्यर्वासीति दक्षिणꣳ सप्तिरसीति मध्यमं वाज्यसीत्युत्तरमथै-
तानाजिसृतो[१] ऽवख्यापयति[२] वाजिनो वाजं धावत मरुतां
प्रसवे जयत वि योजना मिमीध्वमध्वन स्कभ्नीत काष्ठां गच्छते-
त्यौदुम्बर्येषा स्थूणा सप्तदशसु शम्याप्रव्याधेषु निमिता । तां काष्ठे-
त्याचक्षते । तामाजिसृतो ऽतीत्य[३] मा[३] गच्छत[३] मो[४] एनाम-
प्राप्य[४] निवृत्तान्तःपक्षसमेनां[५] कृत्वा सव्यानवगृह्य दक्षिणैरनु-
परिवर्तयाध्वै[६] मो[६] अप्रसृताः[६] सर्पतेति[६] । ॥ ७ ॥ तृतीयः ॥

अथाहाभिसर्प यजमान माहेन्द्रं ग्रहं ग्रहीष्यामीत्यन्वारब्धे यजमाने माहेन्द्रं ग्रहं गृह्णाति महाꣳ इन्द्रो य ओजसेत्यनुद्रुत्योपयामगृहीतो ऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेति । तदेतान्पञ्चैन्द्रानतिग्राह्यान्सह सꣳसादयत्यथाप[७] उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते

१ ॰मथैतान॰ Be B Keś.; ॰मथैनान॰ the other MSS.

२ Thus M Tr Be B F H Keś.; विख्याप॰ Be 11 U and Comm. on Taitt. S. Vol. I, p. 1024.

३ These three words only in Be B and Bhav.; the other MSS. and Keś. omit them.

४ Thus Tr Be B Keś.; मैनाम॰ the other MSS.

५ Thus Be B; निवृत्तंतांतः॰ Tr; निवृत्तांतः॰ M Be 11 U; निवृत्तांततः॰ H; निवृत्यांत्यंतात॰ F.

६ Thus Be B; ॰याध्वैर्मा FH; ॰यध्वंप्रसृतास्सर्पवेति Tr.; ॰यध्वंमाप्रसृताः सर्त्तेति M; ॰याध्वैमाः प्रसृताः सर्पतेति Keś.

७ ॰सादयंत्य॰ MH Keś.

माहेन्द्राय[1] । प्रस्तुते साम्नि संप्रैषमाह ब्रह्मन्वाजिनाꣳ साम गायाजिस्तृत आजिं धावत दुन्दुभीन्समाघ्नताभिषोतारो[2] ऽभिषुणुताग्नीदाग्निरं विनयोलूखलमुद्वादय प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धीति । यथासंप्रैषं ते कुर्वन्ति । गायति ब्रह्मा वाजिनाꣳ साम । तं य एव कश्च[3] परिकर्म्यावेष्टयति । धावन्त्याजिस्तृत । आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाचः । संप्रोदिता[4] वाचो ऽनुमन्त्रयत इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयिदित्यथ रथान्धावतो ऽनुमन्त्रयते वाजेवाजे ऽवत वाजिनो न इति चतसृभिरनुच्छन्दसꣳ । शाम्यन्ति घोषाः शस्ताय । होत्र एषोत्तमेति प्राङ्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं माहेन्द्रं ग्रहमनूद्यच्छन्त इतरानुपोद्यच्छन्ते नाराशꣳसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा[5] यज सोम-

---

१ माहे° M Tr U Be B Be 11; महे° HF.

२ Thus (समाघ्नत, cp. Pitṛmedhasūtra, p. 37. 14) Tr U Be B Be 11; समाहत MHF.

३ Thus M Tr U Be B; कस्न Be11 H; कस्नत F.

४ संप्रवदिता, संवदिता, संप्रवदंता or संप्रवदतो the MSS.; this last reading, presented by M, could also be defended, if we take the part. as an acc. pl. masc., but cp. Bhav. ता अनुमन्त्रयते and infra xii. 13, where the correct reading is given by M.

५ Be B ins. इति after श्रौषट् ।

स्वेति । वषट्कृते जुहोति । तदेतान्पञ्चैन्द्रानतिग्राह्यान्सह[1] जुह्वति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्ति । द्विर्हुतो माहेन्द्रः परिशेत । आयन्ति रथा । आगतानथान्दृष्ट्वा याचत्याज्यस्थालीꣳ सस्रुवाꣳ । स यद्यस्मै रथश्रेषमाचक्षत आग्नीध्र[2] एतां जुहोत्युत स्मास्य द्रवतस्तुरण्यत इत्युभयेनैव रथविमोचनीयं जुहोत्या मा वाजस्य प्रसवो जगम्यादिति । ॥ ८ ॥

अथ याचति नैवारꣳ सप्तदशशरावꣳ सप्तदश सुवर्णानि[3] कृष्णलानि हिरण्यपात्रं मधोः पूर्णमित्येतत्समादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्तरत[4] एते रथा युक्तास्तिष्ठन्ति । तदेतान्यजुर्युजो ऽश्वानवघ्रापयति वाजिनो वाजजितो वाजꣳ सस्रुवाꣳसो वाजं जिगिवाꣳसो बृहस्पतेर्भागे निमृड्ढ्वमित्यथैनमपिधाय प्रज्ञातं निदधात्यथ रथान्विमुच्यमानाननुमन्त्रयत इयं वः सा सत्या संधाभूद्यमिन्द्रेण समधद्ध्वमिति । दुन्दुभीनवस्यतो ऽनुमन्त्रयते ऽजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति । तदेतं यजुर्युजꣳ रथं विमुञ्चति यथादत्तमितरान्व्यावर्तयन्त्युपसंगच्छन्त एनमेत आजिसृतस्तेभ्य एकैकं कृष्णलं व्युत्प्रयच्छति । तानि सार्धꣳ समादाय हिरण्यपात्रं मधोः पूर्णमित्येकधा ब्रह्मण उपहरति । ॥ ९ ॥

---

१ तदेतान् om. Be B ; तदेतत् M.

२ आग्नीध्रीय Be B.

३ सौवर्णानि U.

४ °क्रामत्यु° Tr HF ; °क्रामंत्यु° MU Be B Be 11.

तद्ब्रह्मा प्रतिगृह्योपावरोहत्यथाहाजिसृतो दक्षिणापथेनोपातीत्य दक्षिणाꣳ श्रोणिमभिनिश्रयध्वं¹ मारुता अग्रेणाहवनीयं परीत्य दक्षिणमꣳसमुपसꣳश्रयध्वमिति² । तदेनान्विमिताभ्याममभिविघ्नन्त्यथाहेहि³ यजमानेति । पूर्वया द्वारा हविर्धानं प्रपाद्य यजमानꣳ सोमग्रहानुपस्थापयति ॥ १० ॥

संपृच स्थ सं मा भद्रेण पृङ्क्तेति । विपृच स्थ वि मा पाप्मना पृङ्क्तेति सुराग्रहानेवैताꣳ सुराꣳ सप्रैकामादायैताꣳश्च सुराग्रहानाजिसृद्भ्य उपहरन्ति । तां ते पिबन्तो रममाणा महीयमाना आसते । ऽथ यन्मारुत्या अनवदानीयं तदुभयानन्तरेण⁴ पर्णशाखासु न्यस्यति । तत्समुत्क्रुश्य⁵ त्रिमाथीकुर्वते⁶ । ऽथ यावत्याज्यस्थालीꣳ ससुवां तार्प्यं दर्भमयमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानो ऽनूची पत्न्याहवनीये जुहोत्यन्वारब्धे यजमाने वाजस्य प्रसवश्चेति द्वादश स्रुवाहुतीरथ यजमानं तार्प्यं परिधापयति क्षत्रस्योल्बमसीति । क्षत्रस्य

---

१ °भिनिःश्र° Be (sec. m.) only.

२ Thus M Tr HF Keś.; उपश्रय° Bell U; अभिनिश्रय° B Be.

३ तदेतान् i.s.o. तदेनान् M Tr U Bell H F; अथैनान् Be B; अभिविघ्नंत्य° Be (sec. m.) Tr Bhav.; अभिनिघ्नंत्य° MU Bell F; निघ्नंत्य° H; अभिविवस्य° B Be (pr. m.).

४ तदुभयोरंतरेण M.

५ Thus Be B; समुत्क्रुश्य M U Bell H; समुत्कश्य F; समत्क्रुश्योच्चैः क्रोशन्तः Keś.

६ cp. Āp. xviii. 7. 8; विमाथं कुर्वते (as TBr. I. 3. 8. 4.) M.

योनिरसीति दर्भमयं पत्नीमयैताꣳ श्रितिं[1] यजमानायतनात्प्राचीं वोदीचीं वा यूपमभ्यायातयत्यथ जायामामन्त्रयते जाय एहि सुवो रोहावेति । रोहाव हि सुवरितीतरा प्रत्याहाहं नावुभयोः सुवो रोक्ष्यामीति यजमानस्त्वं नावुभयोः सुवो रोहेति पत्नी । तां दशभिः कल्पै[2] रोहत्यायुर्यज्ञेन[2] कल्पतामित्यान्तं गत्वा बाहू उद्गृह्णाति सुवर्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूमेत्यथेमं लोकं प्रत्यवेक्षते समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोष इत्यथैनामुपावरोहति । स यावति मन्यत एतावति मोदास्यन्तीति[3] तदेनमासपुटैर्घ्नन्ति[4] ॥ ११ ॥

अन्नाय त्वेति पुरस्तादध्वर्युरन्नाद्याय त्वेति दक्षिणतो ब्रह्मा वाजाय त्वेति पश्चाद्धोता वाजजित्यायै त्वेत्युद्गातोत्तरतो । यद्यु वा एते न कामयन्ते ऽध्वर्युरेव पुरस्ताद्घ्नन्ति दक्षिणतः प्रति-

---

१ Thus M Tr Be B; सीतिं U Bell H F; श्रीतिं Bhav. (one copy), श्रितिरं (the other copies); Keś. has thrice सीतिं corrected from original श्रितिं or श्रीतिं ।

२ Thus (as TBr. I. 3. 7. 4.) M Tr UBF Dvaidhasūtra and Bhav. on this passage of the Dvaidha; कल्पैरारोह॰ Be H; thus also Bhav. on the passage of the Vājap.

३ Thus, conjecturally, corrected; मोदास्यंतीति M Tr; मेदास्यंतीति UHF; मांप्रास्यंतीति Be B.

४ जषपुटै॰ FH Be (pr. m.); although at the beginning of this praśna the जषपुटाः have been mentioned, आसपुटैः is here the correct reading, cp. Bhav. a. h. l.

प्रस्ताता पश्चादाग्नीध्र उन्नेतोत्तरतस्तेषां[१] तथा विभागो यथा दुन्दुभीनामंचास्मै[२] प्रत्यवरोहणत[३] आसन्दीं निदधाति । तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानꣳ हिरण्यमथ दक्षिणं पादꣳ हिरण्य[४] उपावरोहत्यमृतमसीति[४] पुष्टिरसि प्रजननमसीति सव्यं बस्ताजिने । ऽथैनमेतयासन्द्या सह आवहन्त्या[५] वा[५] व्रजत्यन्वायन्त्येनमेते[५] चमसा । अथैतस्य बार्हस्पत्यस्येडामुपह्वयत । इडोपहूतं माहेन्द्रꣳ होता चैवाध्वर्युश्च संभक्षयतो नराशꣳसपीतेन नाराशꣳसानचैतेषामतिग्राह्याणां मुख्ये पात्रे सꣳस्रावान्समवनीय यजमान एव प्रत्यक्षं भक्षयत्यपि वैनान्सर्वेश एव चमसेषु व्यवनीय भक्षयेयुरित्येतदपरꣳ । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा

---

१ Thus M Tr; उत्तरत उन्नेता all the other MSS.

२ Thus Tr Be B Be 11 (sec. m.); अथास्मै UFH Be 11 (pr. m.); अच om. M.

३ Thus corrected on account of the collateral passage xviii. 17 s. f. and the Vivaraṇa: प्रत्यवरोह(ण)तः यत्र प्रत्यवरोहति तत्र; MSS. प्रत्यवरोहत ।

४ हिरण्यमुपा॰ M U Be 11 H F; हिरण्यउपा॰ Be; हिरण्येउपा॰ B; हिरण्य om. Tr.

५ Thus Be 11; ॰वहंत्यानाव्रजत्य॰ U; ॰वहंत्यथवाव्रजंत्य॰ M; ॰व्रजंत्य॰ Tr Be B H F, but cp. Bhav.: तयैवासन्द्योद्यम्य सदः प्रापयन्ति स्वयमेव वा गच्छति ।

मार्जयन्ते । ऽथेन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति[१] । संतिष्ठते माध्यंदिनꣳ सवनम् ॥ १२ ॥ चतुर्थः ॥

अथ सावित्रꣳ हुत्वा प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृहीत्वाथ षोडशिनमभिगृह्णात्यसावि सोम इन्द्र त इत्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति[२] । तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः समानो वनस्पतिः समानः स्विष्टकृत्सैषवान्समानीडा समान्यो दिशो । नाना दिश इत्येके । समानं कर्मा ध्रुववद्भ्यश्चमसेभ्यो । ध्रुववद्भिश्चमसैश्चरित्वा त्रिभिरुक्थ्यपर्यायैश्चरतीन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामित्यथ[३] षोडशिना चरत्यथ प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वंश एव राजानमुन्नय मातिरीरिच इति । होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्सर्वंश एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति । तदेतान्प्राजापत्यान्सह सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपा-

---

१ Thus M Tr; चरंति UB Be H Be 11 F.

२ Thus M Tr BHF; चरंति Be 11 U.

३ ०चरतीन्द्रा० M Tr; the other MSS. read plural.

करोति । स्तुवते । तदेतद्बृहत्सामैकविंꣳशं वैष्णवीषु शिपिविष्टवतीषु कुर्वन्ति । होच एषोत्तमेति प्राङ्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शꣳसति । प्रतिगृणाति । प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतꣳ होतृचमसमनूद्यच्छन्त इतरानुपोद्यच्छन्ते चमसानथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति । वषट्कृते जुहोति । तदेतान्प्राजापत्यान्सह जुह्वति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षः प्रजापतिना पीतस्येत्यचैतेषां[1] प्राजापत्यानां मुख्ये पात्रे सꣳस्रावान्समवनीय[2] यजमान एव प्रत्यक्षं भक्षयत्यपि वैनान्सर्वश एव चमसेषु व्यवनीय भक्षयेयुरित्येतदपरमत्र यन्मारुत्या अनवदानीयं तद्वल्गिभ्य उपहरति[3] । तदेतत्समावच्छो[4] विभज्य प्राश्नन्ति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान्हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान्सर्वभक्षा मार्जयन्ते । ऽथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्याहर-

१ Thus M Tr U Be 11; ऽचैषां Be BFH.

२ Thus M Tr; संस्रावसमवनीय Be 11 UH Keś.; संस्रावानवनीय F; सꣳस्रावान्प्रत्यवनीय B Be; cp. supra p. 81, 9.

३ °हरति Be BH Bhav.; हरंति M Tr F.

४ Thus MUHF; तत्तेसमा° Tr Be B; तदेतेसमा° Be (sec. m.).

न्येतानाग्नीध्रादौपयजानङ्गाराꣳस्तानग्रेण[1] होतारं निवपत्युप-
सीदत्युपयष्टा गुदतृतीयैश्चैतानि गुदतृतीयान्येकादशधा कृत्वो-
पयष्टोपयजति । समानमत ऊर्ध्वꣳ । संतिष्ठते वाजपेयो ।
वाजपेयेनेष्ट्वा प्रत्यवरोहणीयेनाग्निष्टोमेन[2] यजेत । संतिष्ठते
वाजपेयः संतिष्ठते वाजपेयः ॥ १३ ॥ पञ्चमः ॥

॥ इत्येकादशः प्रश्नः ॥

---

१ Thus (•हरंत्यो•) all exc. B, which has the sing. and M, which omits this passage altogether.

२ चतुष्टोमेन ins. Tr.

राजसूयेन[१] यक्ष्यमाणो भवति । स पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्या आमावास्येन[१] हविषेष्ट्वा दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः । संतिष्ठत एष प्रायणीयो ऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण उदवसानीयान्तो । ऽथाष्टमे ऽह्न्यानुमतं निर्वपति । हविष्कृता वाचं विसृजते । समानं कर्माधिवपनादध्रुत्य दक्षिणार्धे गार्हपत्यस्याष्टौ कपालान्युपदधात्येकं प्रतिप्रस्थातोत्तरतो नैर्ऋताय । हविःपेष्यै प्रयच्छन्नाह प्राचश्च प्रतीचश्च व्यवघ्नातयन्ती पिण्ड्ढीति[२] । स ये प्राञ्चः शम्याया अवशीयन्ते तानध्वर्युः समुप्य संयुत्यानुमतꣳ श्रपयत्यथ ये प्रत्यञ्चः शम्याया अवशीयन्ते तान्प्रतिप्रस्थाता समुप्य संयुत्य नैर्ऋतꣳ श्रपयत्यादद्त[३] एतं[४] नैर्ऋतमुपस्तीर्णाभिघारितं[४] कृष्णं वासः कृष्णतूषमन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादाय गार्हपत्ये स्रुवाहुतिं जुहोति वीहि स्वाहाहुतिं जुषाण इत्यथ दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणꣳ स्पष्टं भवति प्रदरो वा ।

---

१ ... १ Thus MT Be 11 (the last two om. however स); the other MSS.: राजा राजसूयेन यजेत फल्गुन्यै वा चैत्र्यै वा पुरस्तादामावास्येन । The Vivaraṇa begins also: राजा राजसूयेन यजेतेति, but infra it cites the words यक्ष्यमाणो भवति and cp. comm. on T.S. i. 1.8 and on Tāṇḍ. br. xviii. 8.1.

२ पिंड्ढीति M; the other MSS. still more corrupted.

३ Thus M; श्रपयित्वादद्त T Be 11; Be BU om. त्वादद्त ।

४ Thus M; एतन्नै° all the other MSS.

तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्याङ्गुष्ठाभ्यां[1] परिगृह्य नैर्ऋतं जुहोत्येष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः स्वाहेत्यत्र कृष्णं वासः कृष्णतूषं ददात्यथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति स्वाहा नमो य इदं चकारेत्यथानुमतेन[2] सꣳस्थां करोति ' धेनुं ददाति[3] ' ॥ १ ॥

अथ नवमे ऽह्न्यादित्यं चरुं निर्वपति ' वरं ददात्यथ दशमे ऽह्न्याग्नावैष्णवमेकादशकपालं ' वामनं वहिनं ददात्यथैकादशे ऽह्न्यग्नीषोमीयमेकादशकपालꣳ ' हिरण्यं ददात्यथ द्वादशे ऽह्न्यैन्द्रमेकादशकपालमृषभं वहिनं ददात्यथ त्रयोदशे ऽह्न्याग्नेयमष्टाकपालमैन्द्रं दध्यृषभं वहिनं ददात्यथोपातीत्याग्रयणहवीꣳषि चतुर्दशे ऽह्नि सरस्वत्यै चरुं ' वत्सतरीं ददात्यथ पञ्चदशे ऽह्नि सरस्वते चरुं ' वत्सतरं ददाति ' यद्यु वै चतुर्दश्यामेवोपवसथः संपद्यत एवमेवैतदहरेताभ्यामिष्टिभ्यां[4] नानाबर्हिर्भ्यां[5] यजेताथाप्येतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति ' वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य

---

१ पृष्ठीभ्यां i.s.o. अङ्गुष्ठाभ्यां B Be U.

२ °चकारेत्यनुमतेः Be BU.

३ धेनुर्दक्षिणा Be BU.

४ एकमे° i.s.o. एवमे° M Be BU.

५ Thus M; °बर्हिर्भ्यां Be BU; °व्रीहिभ्यां Be 11 T.

वावृता तूष्णीं वाथ श्वो भूते वैश्वदेवहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते ऽथ श्वो भूत इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपत्यभिहितो रथ उभाकाꣳस्यकवचो[१] गर्भिणीभिर्वा वडबाभिर्युक्तः साण्डैर्वाश्वैरावेष्टो निष्कस्तद्ददात्यथ श्वो भूत इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपत्यनभिहितो रथो[२] ऽकाꣳस्यकवचो[२] ऽगर्भाभिर्वा वडबाभिर्युक्तो निरष्टैर्वाश्वैः[३] स्रक्ष्णको[३] निष्कस्तद्ददाति ॥ २ ॥

एते संतनी इत्याचक्षते ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते स एवमेव संतनीभ्यामहरहर्विपर्यासं[४] यजमानश्चतुरो मास[५] एति[५] काममिष्ट्या कामं पशुबन्धेन कामं

---

१ Thus hesitatingly emended. उभे कंस्येकवचो M; इभैंकस्यकवचो T Be 11; उभौकांस्यकवचौ Be BU; Bhav. उभे कांस्यकवचौ शिरस्त्राणम्, but this may be a periphrase of our compositum. So much, at any rate, is certain, that an adj. is required with the sense उभयतः कांस्यकवच (cp. Kāty. xxii. 10. 30-31, Lāṭy. ix. 4. 14).

२ Again emended; रथो न उकंस्यो उकवचो उग॰ M; could उ in Nandināgarī represent the avagraha? Then the reading of M would be; रथो [न] ऽकंस्यो ऽकवचो ऽग॰ ; रथः कांस्यकवचो Be BU; इभैंकस्यकवचो Be 11 T (omitting रथो).

३ ॰र्वाश्वै स्नक्ष्णको M; ॰र्वान्वैश्चक्षणका T Be 11; ॰र्वाश्वैस्नक्ष्णस्तद॰ Be; ॰र्वाश्वैलक्षणस्तद॰ B, the last two om. निष्कस् ।

४ Here and infra B Be U have sometimes विपर्यासाभ्यां; Be 11 T om. the word every time.

५ Thus here and infra M; मास इति B Be U; मासानेति Be 11 T.

यवाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वेष्ट्वा[1] वरुणप्रघासहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते। ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते। स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानो ऽपराꣳश्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामꣳ श्यामाकाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वेष्ट्वा साकमेधहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते। ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते। स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानो ऽपराꣳश्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामं व्रीह्याग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्वेष्ट्वा शुनासीरीयहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते। ऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते। स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानः सप्ताहान्येति काममिष्ट्वा कामं पशुबन्धेनाथाष्टमे ऽह्नीन्द्रतुरीयमाग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुमन्वाहार्यमासाद्य वह्निनीं धेनुं ददाति॥ ३॥

अथ तदानीमेव पञ्चेध्मीयेन प्रतिपद्यते। पञ्चधाङ्गारान्निरूह्य पञ्चेध्मानभ्यादधाति पर्णमयं पुरस्तान्नैयग्रोधं दक्षिणत आश्वत्थं पश्चादौदुम्बरमुत्तरतः प्लाक्षं मध्ये। ऽथैनानाज्येन व्याघारयति ये देवाः पुरःसदो ऽग्निनेत्रा रक्षोहणस्ते नः पान्तु

१ Thus here and infra MT Be 11 ; संतन्येष्ट्वा B Bc.

ते नो ऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ये देवा दक्षिणसदो ये देवाः पश्चात्सदो ये देवा उत्तरसदो ये देवा उपरिषद इत्यथोपवेषेणाङ्गारान्समूहति[१] समूढꣳ रक्षः संदग्धꣳ रक्ष इदमहꣳ रक्षो ऽभिसंदहामीत्यथैनान्स्रुवाहुतिभिरभिजुहोत्यग्नये[२] रक्षोघ्ने स्वाहेति पञ्चभिरथ[३] प्रष्टिवाहिनꣳ रथं ददात्यथ याचति पर्णमयꣳ स्रुवमपामार्गसक्तून्प्रतिवसनीयं वासो ऽन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादायोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणꣳ स्पष्टं भवति प्रदरो वा । तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्य पर्णमयेन स्रुवेणापामार्गसक्तूञ्जुहोति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ रक्षसो वधं जुहोमि स्वाहेति[४] । हतꣳ रक्ष इति स्रुवमनुप्रहरत्यवधिष्म[५] रक्ष इत्युपतिष्ठते[६] । ऽत्र[७] यद्वस्ते तद्ददात्यथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यैतेन यथेतमेत्येन्द्रतुरीयेण सꣳस्थां करोत्यथ नवमे ऽह्नि पूर्वाणि देविकाहवीꣳषि निर्वपत्यनुमत्यै चरुꣳ राकायै चरुं धात्रे पुरोडाशं द्वादशकपालमित्यन्वाहार्य-

---

१ निरूहति Be T.

२ स्रुवाहुतीभि० M Be U ; स्रुवाहुतीर० BT Be 11.

३ पंचभिर om. Be BU.

४ इति om. Be BU.

५ ०नुप्रहृत्याव० Be BU.

६ उपोतिष्ठते MT Be 11, but cp. Āp. xviii. 9. 18.

७ om. B Be U .

मासाद्य[१] वत्सतरीं[२] ददात्यथ दशमे ऽहन्युत्तराणि देविकाहवींषि निर्वपति सिनीवाल्यै चरुं कुह्वै चरुं धात्र एव[३] पुरोडाशं द्वादशकपालमित्यन्वाहार्यमासाद्य[४] वत्सतरं[५] ददात्यथैकादशे ऽहनि त्रिषंयुक्तैः प्रतिपद्यत आग्नावैष्णवं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं । वामनमृषभं वहिनं ददात्यथ द्वादशे ऽहन्यग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालं सौम्यं चरुं । बभ्रुं ददात्यथ त्रयोदशे ऽहनि सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं । श्यामं ददात्यथ चतुर्दशे ऽहनि वैश्वानरं द्वादशकपालं निर्वपति । हिरण्यं ददात्यथ पञ्चदशे ऽहनि वारुणं यवमयं चरुमश्वं ददाति । ॥ ४ ॥ प्रथमः ॥

अथैनमामावास्येन हविषेजानं रत्निनः पर्यवस्यन्ति[६] दक्षिणतो वोदञ्चो पश्चाद्वा प्राञ्चस्तेषामवसितानां ब्रह्मैव दक्षिणार्धो वापरार्धो वा भवति । स[७] यत्किंच यज्ञपरिभोजनं[८] ब्रह्मण एव[९] तद्गृहे[९] भवत्यथारण्योरग्नीन्समारोह्य ब्रह्मणो

---

१ इति om. T Be 11 U.

२ ०तरं Be 11 T.

३ om. B Be U; the word should be supplied, also Vol. i. p. 264, 4.

४ इति om. all the MSS.

५ ०तरीं Be 11 T.

६ पर्युपविशंति B Be U.

७ om. Be 11 T.

८ ०भाजनं B Be U.

९ Thus M Be 11 T; एवैत० B Bc.

गृहानध्यवसाय मथित्वाग्नीन्विहृत्य बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे । शितिपृष्ठं ददात्यथारण्योरग्नीन्समारोह्य[1] स्वान्यग्न्यायतनान्यभिप्रव्रजति[2] । तं यन्तमनुमन्त्रयते ऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्यथ स्वान्यग्न्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्येन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रतिनिर्वपत्यथास्यैतदहः[3] श्वेतायै श्वेतवत्सायै पयो दोहयित्वा समातच्य निदधात्यथ श्वो भूते ऽरण्योरग्नीन्समारोह्य राजन्यस्य गृहानध्यवसाय मथित्वाग्नीन्विहृत्यैन्द्रमेकादशकपालꣳ राजन्यस्य गृहे । ऋषभं ददाति । तथारण्योरग्नीन्समारोह्य स्वान्येवाग्न्यायतनान्यभिप्रव्रजति[4] । तं तथैव[5] यन्तमनुमन्त्रयते । यस्ययस्य गृहे यजते सभो ऽनुमन्त्रयते ऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्यथ स्वान्येवाग्न्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्येन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं प्रतिनिर्वपति । प्रज्ञातमेवास्यैतदहः श्वेतायै श्वेतवत्सायै पयो दोहयित्वा समातच्यैव[6] निदधात्यथ तृतीये ऽह्न्यादित्यं चरुं महिष्यै गृहे । धेनुं ददात्यथ चतुर्थे ऽह्नि भगाय चरुं वावातायै गृहे । विच्छित्तगर्भां पष्ठौहीं ददात्यथ पञ्चमे ऽह्नि

१ ०रोप्य here and infra sometimes B Be U.

२ ०व्रजंति MT Be Be 11 ; ०इत्ति B.

३ प्रति om. MT Be 11 but cp. Āp. xviii. 10. 28.

४ एव after स्वानि om. MT Be 11 ; ०व्रजति T Be 11. B ; ०व्रजंति M Be.

५ Thus MUB Be ; एव om. Be 11 T.

६ सम् om. Be BU.

नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं । कृष्णां कूटां ददात्यथ षष्ठे ऽह्न्याग्नेयमष्टाकपालꣳ सेनान्यो गृहे । हिरण्यं ददात्यथ सप्तमे ऽह्नि वारुणं दशकपालꣳ सूतस्य गृहे । महानिरष्टं ददात्यथाष्टमे ऽह्नि मारुतꣳ सप्तकपालं ग्रामण्यो गृहे । पृश्निं ददात्यथ नवमे ऽह्नि सावित्रं द्वादशकपालं क्षत्तुर्गृहे । उपध्वस्तं ददात्यथ दशमे ऽह्न्याश्विनं द्विकपालꣳ संग्रहीतुर्गृहे । सवात्यौ ददात्यथैकादशे ऽह्नि पौष्णं चरुं भागदुघस्य गृहे । श्यामं ददात्यथ द्वादशे ऽह्नि रौद्रं गावीधुकं चरुमक्षावापस्य गृहे । शबलमुद्वारं ददाति । प्रसिद्धमेवास्यैतदहः[1] श्वेतायै श्वेतवत्सायै पयो दोहयित्वा[2] समातच्येव[3] निदधात्यथ त्रयोदशे ऽह्नि मैत्राबार्हस्पत्यं भवति । ॥ ५ ॥

अथ वै भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य आश्वत्थे पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्विचिनुयादित्यथ वै भवति स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्म इति । राजेवायꣳ[4] स्वयं कर्मभिः पूजितो भवति । स[5] स्वयमेव वेदिं करोति स्वयमिध्माबर्हिः संनह्यति स्वयमाश्वत्थं पात्रं चतुःस्रक्ति[6]

---

१ Thus B Be U ; प्रसिद्धमेवास्यैतं द्वादशाहं M ; अथ प्रसिद्धमेवास्यैद्द्वादशाहं T Be 11.

२ दोहयित्वादोहयित्वा M.

३ समातच्यसमातच्येव M ; तानर्धमासाद्च्येव Be 11 T.

४ corrected ; राजेवायसु M Be BU ; राजेवेयं Be 11 T.

५ om. T Be 11.

६ स्रक्ति T Be 11, but cp. Āp. xviii. 11. 2.

करोति[1] स्वयमवपन्नायै शाखायै कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्विचिनोत्यथ वै भवति ये कर्णाः स पयसि बार्हस्पत्यो ये ऽकर्णाः स आज्ये मैत्र इत्यथोत्तरतो भस्मामिश्रानङ्गारान्निरूह्य तेषु नवं पात्रमधिश्रित्य तिरः पवित्रमाज्यमानीय[2] तिरः[2] पवित्रमकर्णानोप्य[2] तेन[2] बार्हस्पत्यमपिदधाति[3] । तं तयापिहितमन्तर्वेद्यासादयति[4] । समानं कर्म प्रयाजेभ्यः । पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सꣳस्रावेण बार्हस्पत्यमभिघार्य मैत्रमभिघारयति । बार्हस्पत्येन पूर्वेण प्रचरत्यथ मैत्रेण । बार्हस्पत्यस्य पूर्वस्य स्विष्टकृते ऽवद्यत्यथ मैत्रस्य । बार्हस्पत्यस्य पूर्वस्येडामवद्यत्यथ मैत्रस्यान्वाहार्यमासाद्यैतामेव श्वेताꣳ श्वेतवत्सां ददाति । संतिष्ठते मैत्राबार्हस्पत्यꣳ हविः । ॥ ६ ॥ द्वितीयः ॥

अथैतस्मिन्नेव पूर्वपक्ष उक्थ्यायाभिषेचनीयाय दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तथा राजानं क्रीणाति यथा मन्यते ऽमावास्यायै मे यज्ञिये[5] ऽहन्सुत्या संपत्स्यत इति ।

---

१ याचति B Be U.

२ Thus M; Be BT om. आज्यमानीय तिरः पवित्रं and Be BU have कर्णान् i.s.o. अकर्णान्।

३ अभिद॰ Be 11 T.

४ तेनमपिहित॰ T Be 11.

५ Thus MB Be; यज्ञीये U; यजनीये T Be 11; this latter might be the right reading, but as the expression यज्ञिये ऽहन occurs several times infra, xvii. 55-61, without any various reading, I did not venture to write यजनीये in the text.

तस्य तथा संपद्यते । ऽथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वा रोहिते[१] चर्मणि[१] राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्याथान्वहमुपसद्भिश्चरत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय रथवाहने सदोहविर्धाने संमिनोति । रथवाहने सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्यावृता यूपमुच्छ्रयति । स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्गृहीत्वाथ पशुपुरोडाशं निर्वपति । तमनुवर्तन्ते ऽष्टौ देवसुवाᳬ हवीᳬष्यग्नये गृहपतय इत्येतानि । तेषामुक्तं चरणं यथाग्नेर्विधायामिडान्ताः पुरोडाशाः संतिष्ठन्ते । पत्नीसंयाजान्ताः पशुर्हृदयशूलान्त इत्येके । ऽथैतान्दुन्दुभीननुदिशमासञ्जयत्यथ वसतीवरीः परिहृत्य पयाᳬसि विसिच्योपवसन्त्यथातो महारात्र एव बुध्यन्ते । प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यङ्गिरदैत्युक्थ्य[२] क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं[३] गृहीत्वा द्वे रशने आदाय यूपमभ्येति । स्वर्वन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति । तस्यैन्द्राग्न उपालम्भ्यो भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा प्रसर्पन्ति

---

१ Missing in M Be T, but cp. the Dvaidhasūtra.

२ •रदैत्यु• Be U; •रदैत्य• the other MSS.

३ om. M Be.

प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि होष्यन्नाचत्याज्यस्थालीꣳ सस्रुवाꣳ स्रुचं वासस्त।स्यैतस्य वसनस्यान्तमायां दशायां निष्करज्जुः प्रग्रथिता[1] भवत्यैतत्समादायाहैहि[2] यजमानेत्यु।त्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्याग्रेण शालां तिष्ठते प्रतिप्रस्थाता एतानि शस्त्राणि प्रयच्छत्य।थाहैहि यजमानेति । रथ एष दक्षिणे श्रोण्यन्ते रथवाहन आहितो भवति । तमुपावहरतीन्द्रस्य[3] वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादित्य।थैनं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयन्ति[4] तूष्णीम।थास्याश्वान्पल्पूलयति तूष्णीम।थ दक्षिणं योग्यं युनक्ति[5] मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेनेत्य।थास्य पृष्ठं सम्मृज्यते तूष्णीमेवमेवोत्तरं योग्यं युनक्ति । तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति । तयोरेवमेव पृष्ठे[6] सम्मृज्यत[6] । एतस्य योगमनु सर्वमाणिवद्युज्यते । ऽधिकक्ष्यान्हस्तिनः कुर्वन्ति । प्रवेष्टयन्ति वासोभारान्व।सनानां दशासु निष्करज्जूः प्रग्रथ्नन्ति । पूगशो दक्षिणा आयातयत्य।थ सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति ।

---

१ •थितो MSS.

२ भवतीत्येत• M.

३ •हरती• Be BU ; •हरंति• MT Be 11.

४ Thus M only ; •भ्यवर्तयंति T Be 11 U Be ; •भ्यावर्तयंति B.

५ Here Be BU ins. तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति ।

६ Thus MB Be U ; पृष्ठसुन्मृज्य T Be 11.

न्यवत्यर्चाग्नीध्रे जुहोति ' सृज्यन्ते[१] दक्षिणा दक्षिणापथेन ' स यत्किंचिद्ददाति[२] हिरण्यमुखमेव ददात्यथ वासाꣳस्यथ[३] युक्तानि[३] गोअश्वꣳ हस्तिपुरुषमन्ततो[४] ' ऽदत्ता एवैते रथा अतिवर्तन्ते[५] ' नैते ऽन्यस्य सन्त आजिं धावन्ति ' मनसैव स्वरथमध्वर्यवे ददाति ' मनसा चतुष्पात्स्वेत्रं[६] ब्रह्मण आदिशति ' मनसा समनुदिश्य[७] दक्षिणास्त्रिभिर्मरुत्वतीयैश्चरति[८] ' सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो[९] माहेन्द्राय ' ॥ ७ ॥

अथ याचति वैतसं[१०] द्रोणकलशꣳ षोडशि[११] वायव्यान्यथास्यैतत्पुरस्तादेव[१२] षोडशतयं आपो दिग्भ्यः संभृता[१३]

---

१ संसृज्यते T Be 11.

२ यत्किंचद्० M.

३ Thus M; उत i.s. of अथ T Be 11; B Be again (cp. supra p. 73, 10) वनांसि i.s.o. अथ।

४ Thus MUB Be; हस्तिदासपुरुष० T Be 11.

५ Thus M only; अतिनिर्वर्तते Be BU; अतिपतंते Be 11 T.

६ चतुष्पात्स्वेत्रं all MSS. exc. M which has चतुष्पत्स्वेत्रं; one copy of Bhav. has the word with ā, another with a, cp. Ait. Br. viii. 20, 2.

७ Thus MB; समनुदिश्य Be U; समुदिश्य Be 11 T.

८ चरति M; चरंति the other MSS.

९ ०स्यावालंब० Be (sec. m.).

१० च ins. MT Be 11.

११ षोडशंच M.

१२ एताः i.s.o. एव Be BU.

१३ Thus M Be; संभृता BU; समाहृता Be 11 T.

# INDEX.


Agnicayanam ... ... ... Praśna X.

Vājapeyaḥ ... ... ... „ XI.

Rājasūyaḥ ... ... ... „ XII.

Iṣṭikalpaḥ ... .. „ XIII.

Aupānuvākyam ... ... ... „ XIV.

Aśvamedhaḥ ... ... ... „ XV.

Dvādaśāhaḥ ... ... ... „ XVI. 1-12 (adhy. 1-3).

Gavām ayanam ... ... ... „ „ 13-23 ( „ 4-6).

Ahīnāḥ ... ... ... ... „ „ 24-fin.

dvirātraḥ, trirātraḥ ... ... „ „ 24-27 ( „ 7).

catūrātraḥ ... ... ... „ „ 28 }

pañcarātraḥ, sārasvatam ayanam ... ... ... „ „ 29 } ( „ 8).

munyayanam ... ... ... „ „ 30 }

saptarātraḥ-daśarātraḥ ... „ „ 31 }

ekādaśarātraḥ-trayodaśarātraḥ ... ... ... ... „ „ 32 } ( „ 9).

caturdaśarātraḥ-viṃśatirātraḥ . „ „ 33 ( „ 10).

caturviṃśatirātraḥ-catustriṃśadrātraḥ ... ... ... „ „ 34-35 ( „ 11).

ṣaṭtriṃśadrātraḥ-sahasrarātraḥ ... ... ... ... „ „ 36 ( „ 12).

Uttarā tatiḥ ... ... ... Praśnas XVII and XVIII.

atirātraḥ ... ... ... Praśna XVII. 1-10 (adhy. 1).

ekādaśinī ... ... ... „ „ 11-16 ( „ 2-3).

punaścitiḥ .. ... ... „ „ 17 ( „ 4).

sarpasattram ... ... ... „ „ 18 ( „ 5).

viśvasṛjām sattram ... ... „ „ 19 ( „ 6).

kuṇḍapāyinām ayanam ... „ „ 20, 21 ( „ 7).

utsargiṇām ayanam ... ... „ „ 22 ( „ 8).

tapaścitām ayanam ... ... „ „ 23 }

aharahaścayanam ... ... „ „ 24 }

upariṣṭānmāsam ... „ „ 25 } ( „ 9).

purastānmāsam ... ... „ „ 26 }

brahmaṇo 'yanam ... ... „ „ 27 }

kāmyāś citayaḥ ... ... „ „ 28-30 ( „ 10).

sautrāmaṇī ... ... ... „ „ 31-38 ( „ 11).

samāvartanam ... ... „ „ 39-44 ( „ 12,13).

naiṣṭyayanāni ... ... „ „ 45-46 ( „ 14).

kāmyā darśapūrṇamāsāḥ ... „ „ 47-54 ( „ 15).

cāturmāsyāḥ somāḥ ... ... „ „ 55-58 ( „ 16).

jyotirayanam ... ... ... „ „ 59-60 ( „ 17).

mahāyajñaḥ ... ... ... „ „ 61-62 ( „ 18).

Ekāhāḥ ... ... ... ... „ XVIII.

bṛhaspatisavaḥ ... ... „ „ 1-2 }

sthapatisavaḥ ... ... „ „ 3 } ( „ 1).

sūtasavaḥ ... ... ... „ „ 4 }

| | | | | |
|---|---|---|---|---|
| somasavaḥ ... ... ... | Praśna XVII, | 5 | | |
| pṛthisavaḥ ... ... ... | ,, ,, | 6 | (adhy. | 2). |
| gosavaḥ ... ... ... | ,, ,, | 7 | | |
| odanasavaḥ ... ... ... | ,, ,, | 8-10 | ( ,, | 3). |
| pañcaśāradīyaḥ ... ... | ,, ,, | 11 | | |
| agniṣṭut ... ... ... | ,, ,, | 12-13 | | |
| indrastut .. ... ... | ,, ,, | 14 | ( ,, | 4). |
| aptoryāmaḥ ... ... ... | ,, ,, | 15 | | |
| mṛtyusavaḥ ... ... ... | ,, ,, | 16-19 | ( ,, | 5). |
| sadyaskrī, anukrī, parikrī, atikrī ... ... ... | ,, ,, | 20-23 | ( ,, | 6). |
| vrātyastomāḥ ... ... ... | ,, ,, | 24-26 | ( ,, | 7). |
| bhāllavistomāḥ ... ... | ,, ,, | 27 | | |
| upahavyaḥ ... ... ... | ,, ,, | 28 | | |
| tīvrasomaḥ, vighanaḥ ... ... ... | ,, ,, | 29-30 | ( ,, | 8). |
| udbhid, valabhid ... ... | ,, ,, | 31 | | |
| ṛtapeyaḥ, diśāṃ catuṣṭomaḥ, chandasāṃ ekatrikaḥ, stomānāṃ ekatrikaḥ, indrāgnyo stomaḥ ... ... | ,, ,, | 32-35 | ( ,, | 9). |
| śyenaḥ, iṣuḥ, indravajraḥ ... | ,, ,, | 36 | | |
| duraśaḥ, durṇāśaḥ, apacitiḥ, tviṣiḥ ... ... ... | ,, ,, | 37-39 | ( ,, | 10). |
| ṛṣabhaḥ, vaniṣṭhusavaḥ, kānāndhayajñaḥ ... ... | ,, ,, | 40-41 | | |
| manuyajñaḥ, vāca stomaḥ ... | ,, ,, | 42 | ( ,, | 11). |
| yamastomaḥ ... ... ... | ,, ,, | 43 | | |
| śadopaśadau paurūravasau, prājāpatyau, naidhruvasya kaśyapasya | ,, ,, | 44 | ( ,, | 12). |
| punastomau ... ... .. | ,, ,, | 45-47 | ( ,, | 13). |
| praṇodaḥ, vibādhaḥ, pratinodaḥ, agner ativyādhaḥ, indravajraḥ, śunaskarṇayajñaḥ, rāśimarāyau, āñjanābhyañjanau, viṣūcīnaśālaḥ, sarvatomukhaḥ, sahasraśālaḥ | ,, ,, | 48-49 | ( ,, | 14). |
| yamau stomau, agnyādityayo stomaḥ (?) ... ... ... | ,, ,, | 50 | ( ,, | 15). |
| peyāni, diśāṃ stomaḥ, ṛtūnāṃ st., ṛṣīṇāṃ st., devatānāṃ st., darśapūrṇamāsayor ayanam ... ... .. | ,, ,, | 51-53 | ( ,, | 16). |
| Kāṭhakam ... ... ... | ,, XIX. | | | |
| sāvitraḥ ... ... ... | ,, ,, | 1-5 | (adhy. | 1-3). |
| nāciketaḥ ... ... ... | ,, ,, | 6 | ( ,, | 4). |
| brahmacit ... ... ... | ,, ,, | 7 | ( ,, | 5). |
| samastaḥ ... ... ... | ,, ,, | 8 | ( ,, | 6). |
| vaiśvasṛjaḥ ... ... ... | ,, ,, | 9 | ( ,, | 7). |
| āruṇaketukaḥ ... ... | ,, ,, | 10 | ( ,, | 8). |

दक्षिणस्य[१] हविर्धानस्य प्राच्यो ऽक्षात्प्रतीच्य उपस्तम्भनान्निहिताः शेरते । तासां वहन्त्यः पूर्वार्ध्या भवन्ति सारस्वत्यो ऽपरार्ध्याः । स वहन्तीरभिजुहोत्यर्थेत स्थापो देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति । गृह्णाति पर्णमयेन राष्ट्रदा स्थ राष्ट्रममुष्मा आमुष्यायणायामुष्य पुत्रायामुष्य पौत्राय दत्तेत्यपां पतिरसीत्यपांपतीयाः पुंनाम्नो[२] वोत्सस्य[२] समुद्रिया वा । वृषास्यूर्मिरित्यौर्म्या । वृषसेनो ऽसीति पल्वल्या । व्रजक्षित स्थेति कूप्या । मरुतामोज स्थेति निवेष्या:[३] । सूर्यवर्चस स्थेत्यतिदृश्या:[४] । सूर्यत्वचस स्थेत्यातपति वर्ष्या । मान्दा स्थेति ह्रादुन्यो[५] । वाशा स्थेति पृष्वा:[६] । शक्वरी स्थेति गोरुल्ब्या । विश्वभृत स्थेति पयो । जनभृत स्थेति दध्यग्नेस्तेजस्या स्थेत्याज्यमपामोषधीनाꣳ रस स्थेति मध्वथ

१ Thus Be BU Bhav.; उत्तरस्य MT Be 11.

२ Thus M Bhav.; पुन्नाम्नोवात्सस्य Be U; पुन्नाम्ना वात्सस्य B; पुन्नामेनास्य Be 11 T.

३ Thus M Bell T and the best MSS of the Karmānta-sūtra; परिवेष्या: B Be and Bhav.; निवेष्य the Vājasaneyins.

४ Thus only M and Bhav.; सूर्यवर्चसस्थेतिदृश्यं Be 11 T.; ०स्थेतिदिश्या: Be; in BU the passage is missing; the Karmānta MSS. read अभिदृश्या: ।

५ Thus M Be; the other MSS. defective.

६ Thus M Be Bhav.; वर्ष्या: Be 11 T; but cp. TS. VII. 4. 13.

सारस्वतीरभिजुहोत्यपो[१] देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः। याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति । गृह्णाति पर्णमयेन राष्ट्रदा स्थ राष्ट्रममुष्मा आमुष्यायणायामुष्य पुत्रायामुष्य पौत्राय दत्तेत्यथैना वैतसे द्रोणकलशे समवनयति देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं महि वर्चः क्षत्रियाय वन्वाना इत्यथैना अन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च सादयत्यनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरित्यत्र ये ऽर्थ्याः[२] प्रेरका अध्वर्योस्तानावसथꣳ हरन्त्यथ ये[३] ऽनर्थ्या[३] अपस्तानभ्यवहरन्त्यनभिहुतानाꣳ सारस्वतीनां वसतीवरीर्दशपेयाय परिशाययन्ति । ॥ ८ ॥ तृतीयः ॥

अथात्रैव तिष्ठन्याचति दर्भनाडीꣳ शतमानꣳ[४] हिरण्यं चत्वारि नानावृक्ष्याणि पात्राणि[५] तार्प्यं चोष्णीषं चैकशतं च दर्भपुञ्जीलानि दश्युदुम्बरꣳ शष्पाणि धनुश्चेषूꣳश्चेति[६] । स दर्भनाड्याꣳ शतमानꣳ हिरण्यं प्रग्रथ्नात्यनिभृष्टमसि वाचो बन्धुस्तपोजा इत्यथैनद्वैतसे[७] द्रोणकलशे ऽवदधाति सोमस्य

---

१ Thus M Be U ; the other MSS. more or less corrupted.

२ तीर्थ्याः M Be 11 T.

३ येनतीर्थ्या M Be 11 T.

४ च ins. T Be 11.

५ यानि ins. Be BU.

६ इति om. Be BU.

७ Thus M only ; यथैतद्वै॰ Be BU ; यचैतद्वै॰ Be11 T.

दात्त्रमसीति । हिरण्येनोत्पुनाति शुक्रा वः शुक्रेणोत्पुनामि चन्द्रास्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः इति । गृह्णाति पर्णमयेन सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानाः । पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तरिति । पुरस्तादासीनाय ब्रह्मणे प्रयच्छत्येतयैव गृहीत्वा दक्षिणत आसीनायौदुम्बरेण राजन्याय प्रयच्छत्येतयैव गृहीत्वा पश्चादासीनायाश्वत्थेन वैश्याय प्रयच्छत्येतयैव गृहीत्वोत्तरत आसीनाय नैयग्रोधेन जन्याय प्रयच्छत्यथैतं[1] प्रत्येकमाग्नीध्रꣳ[1] हुत्वापिधाय[1] प्रज्ञातं निदधात्यथ यजमानं तार्प्यं परिधापयति क्षत्रस्योल्बमसीति । क्षत्रस्य योनिरसीत्यासजते[2] तार्प्यमभीव नाभिमुष्णीषं पर्यस्यत्यथैनमेकशतेन दर्भपुञ्जीलैः पवयति नित्येन पवनेनाथैनमुन्मृजन्नाशयति[3] दध्युदुम्बरꣳ प्राश्याणीत्यथैनमाविद्भिः प्राञ्चमानयत्याविन्नो अग्निर्गृहपतिरिति सप्तभिरनुच्छन्दसमथैनं यजमानायतने तिष्ठन्तं प्राहैष वो भरता राजेति येषाꣳ श्रेष्ठी[4] भवति । सोमो ऽस्माकं ब्राह्मणानाꣳ राजेतीतरे प्रत्याहुरथास्मै धनुः

---

१ Thus M only ( reading however एनं i.s.o. एतं ); Be U om. आग्नीध्रं . Be 11 T are wholly corrupted.

२ Thus M Be B U ; आचक्षते Be 11 T ; Bhav. reads सचते or आसचते ।

३ Uncertain reading : •मुन्मृजमाशयति M U Be B ; T Be 11 totally corrupted : •मुदुंबरमाशयति ।

४ Thus T Be 11 ; राजा M U Be B.

प्रयच्छतीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादिति शत्रुबाधना स्थेतीषूञ्छत्रून्मे[1] बाधध्वमितीतरः[2] प्रतिगृह्णाति पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्यथ हिरण्यवर्णावुषसाꣳ विरोक इति त्रिष्टुभा[3] बाहू उद्गृह्णात्यथैनꣳ सꣳशास्ति मनसैव दिशो ऽनुप्रक्राम मनसोर्ध्वामनूज्जिहीष्वेत्यथैनं[4] वाचयति ॥ ९ ॥

समिधमातिष्ठोग्रामातिष्ठ विराजमातिष्ठोदीचीमातिष्ठोर्ध्वामातिष्ठेत्यथात्रैव[5] तिष्ठन्याचति मारुतं चैकविꣳशतिकपालं वैश्वदेवीं चामिक्षां[6] तस्य यो ऽरण्ये ऽनुवाक्यो गणस्तेन मध्यमानि कपालान्युपहितानि भवन्ति राजसूयगणाभ्यामितराणि ताभ्यां चरति[7] मरुद्भ्यो ऽनुब्रूहि मरुतो यजेति विश्वेभ्यो देवेभ्यो ऽनुब्रूहि विश्वान्देवान्यजेत्यनिष्टस्विष्टकृते[8] एवैते हविषी[9] अपिधाय[9] प्रज्ञाते निदधात्यथ याचति शार्दू-

---

१ Before मे T Be 11 ins.: एवास्य बाधंत इति ब्राह्मणं, cp. TBr. I. 7. 6. 8.

२ Thus M Be 11 T; बाधयध्वमि॰ Be BU.

३ Be BU चिर् or त्रि, but cp. T Br. l. c.

४ Emended; ॰र्ध्वामनुजिहो॰ M; ॰र्ध्वामनूजजीषुहो॰ T Be 11; ॰र्ध्वाजिहीर्षेत्य॰ Be BU; cp. TBr. I. 7.7.2 and Hir. XIII. 15: मनसोर्ध्वामनूज्जिहीते।

५ अथ om. Be BU.

६ All the MSS. exc. M om. च।

७ चरंति M T Be 11.

८ Before अनिष्टस्वि॰ M T Be 11 ins. आमिक्षया चरति।

९ Thus M Be BU ; हवींषि भवतोपिधाय T Be 11.

त्वचर्मं सुवर्णरजतौ च[1] रुक्मौ वाराहौ उपानहौ सौमं च लोहितायसं च । दक्षिणतः क्लीब आस्ते । ऽथ पुरस्तादभिषेकस्य षट् पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यत्यमृतमसि मृत्योर्मा पाहीत्यधस्ताद्रजतमुपास्यति दिद्योन्मा पाहीत्युपरिष्टात्सुवर्णꣳ शतातृह्मंथावेष्टा दन्दशूका इति दक्षिणत आसीनं क्लीबꣳ सीसेन विध्यति । सव्येन पादेन लोहितायसं निरस्यति निरस्तं नमुचेः शिर इत्यथास्मा अभिषेकान्संप्रगृह्णन्ति[2] । तान्सो ऽवेक्षते ॥ १० ॥

सोमो राजा वरुणो देवा धर्मसुवश्च ये । ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रꣳ सुवन्तामित्यथ ब्रह्मणः[3] पात्रमादाय तेनाभिषिञ्चत्यध्वर्युरेव[4] यजुर्जपत्यभिषिञ्चन्तीतरे सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा क्षत्राणां क्षत्रपतिरस्यति दिवस्पाह्यसावित्यथोर्ध्वा

---

१ om. MB.

२ Thus M; संप्रतिगृह्णाति T Be 11; हरंति i.s. of संप्रगृह्णंति Be BU; Bhav. periphrases: सहोद्यच्छन्ते ।

३ Thus M Be U; ब्रह्मण B; ब्राह्मणाः Be 11 T.

४ तेनाभिषंचंत्य॰ T Be 11.

धाराः ससुन्मृष्टे समावृत्त्यन्नधरागुदीचीरहिं बुध्नियमनुसंचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयाना इत्यथैतेषामभिषेकाणां मुख्ये पात्रे संस्रावान्समवनीय[1] प्रतिहितस्य गृहाणेत्यथान्वारब्धयोः प्रतिहिते च महिष्यां च जुहोति प्रजापते न त्वदेतान्यन्य इत्यथास्मा एष प्रतिहितो वरं ददात्यथ प्रतिहिताय पात्रं प्रयच्छन्नाहेदं ते पात्रं दायाद्यमसद्यदा[2] त्वाभिषिञ्चामीदं ते ऽसदित्यथैतेनैव यथेतमेत्याग्नीध्रे[3] प्रैरेकं जुहोति रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहेत्यथास्मै धनुः प्रयच्छति यदि पुरस्तादप्रत्तं भवति। ससुन्मृष्टे ससुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता राजसूयेनेत्यथ भूर्भुवः सुवरिति वाचं विसृजते। द्वाभ्यां मुखं विमृष्टे। गायत्राान्विष्णुक्रमान्क्रमते[4]। ऽथोपरिष्टादभिषेकस्य षट् पार्थानि जुहोतीन्द्राय स्वाहा घोषाय स्वाहेति। द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यथैतयोर्हविषोः स्विष्टकृता चरत्यथैने अपिधाय प्रज्ञाते निदधाति। ॥ ११ ॥

अथ वाराही उपानहावुपमुञ्चते पशूनां मन्युरसीति

---

१ ॰स्वावमवनीय M.

२ Thus M, which omits only यदा, but cp. infra XII. 13 s. f.; दायाद्यंसद्यदा Be U; the other three MSS. are wholly corrupted; my copies of Bhav. read सद् i.s.o. असद्।

३ आग्नीध्रे om. Be BU.

४ Thus Be 11 T; गायत्राावि॰ MU Be B.

दक्षिणे पादे तवैव मे मन्युर्भूयादिति सव्ये । ऽथेमामभिमृशति नमो मात्रे पृथिव्या इति । तस्यां दक्षिणं पादमुपावहरति[1] माहं मातरं पृथिवीꣳ हिꣳसिषमिति मा मां माता पृथिवी हिꣳसीदिति सव्यमथान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामति[2] विष्णोः क्रमो ऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीत्युत्तरत एते रथा युक्तास्तिष्ठन्ति । तान्दृष्ट्वैव प्रतिहितो ऽवतिष्ठत्यथ प्रतिहितस्य धनुरादायाधिज्यं कृत्वा रथमातिष्ठति मरुतां प्रसवे जेषमित्याप्तं मन इति कूबरमभिनिश्रयते[3] । तं तदानीमेव प्रतिहितो ऽन्वातिष्ठति प्रससाहिषे पुरुहूत शत्रूनिति । त्रिष्टुभान्वारभत इति ब्राह्मणमथ[4] प्रतिहिताय[4] धनुः प्रयच्छन्नाह राजन्य एष षट्त्रिꣳशत्सु शम्याप्रव्याधेषु निर्जयेन[5] सहस्रेणावसितस्तस्मा[6] इषुमस्यतादपेनꣳ[7] राध्नुताञ्जिलेनं[8] दक्षिणापथेनात्याकुरुतादिति । राजन्य

१ Thus MT Be 11; उपवहति Be BU.

२ °ष्क्रामति Be 11 T Be BU; °ष्क्रामंति M; Bhav. reads the plural, cf. p. 75, 3.

३ Thus corrected (cp. p. 79, 2; 105, 16); °भिनिश्र्यते M Be U; °भिश्रियते B; °भिश्रायते Be 11 T.

४ Thus M only; ब्राह्मणंसतिप्रतिहिताय Be 11 T; ब्राह्मणमथनिहिताय Be BU.

५ Thus MU Be B; निर्जयेण Be 11 T.

६ Thus Be BU; °वसितस्यास्मा M; °वसीततस्मा Be 11 T.

७ Thus corrected; °मस्यतादावैनं Be 11 T; °मस्यतादयैनं M; °मास्यतादपैनां Be BU.

८ Thus corrected; °भ्रुताजिलेनं Be BU; °भ्रुताजलेनं T Be 11; °भ्रुतांजिलेनं M.

एव सꣳश्लिष्टो[१] भवति राजपुत्रस्त इषुमसिष्यति[२] स त्वाप-रात्स्यति[३] तस्मा उत्तरवर्ग्येण[४] संमृज्येषु[५] प्रयच्छतादिति। स तथा करोति॥ १२ ॥ चतुर्थः॥

अथाहाभिसर्प यजमान माहेन्द्रं ग्रहं ग्रहीष्यामीत्यन्वारब्ध यजमाने माहेन्द्रं ग्रहं गृह्णाति महाꣳ इन्द्रो य ओजसेत्यनुद्रुत्योपयामगृहीतो ऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेत्यथैतान्मणीन्याचति राजतमौदुम्बरꣳ सौवर्णमिति। त एते[६] नानासूत्रेष्वोता भवन्ति। तानुत्तरस्य हविर्धानस्य मध्यमे वꣳशे प्रग्रथ्याप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते माहेन्द्राय। प्रस्तुते साम्नि संप्रेषमाहाजिसृत

---

१ Thus corrected; संश्लष्टो M; श्लिष्टो T Be 11; संश्लिक्षो Be BU.

२ Thus corrected; इषुमासिष्यति Be BU; इषुमवसिष्यति M; इषुमस्यति T Be 11.

३ Thus corrected; ॰परास्यति MSS.

४ Thus M Be BU; ॰वर्गेण T Be 11.

५ Thus M; समज्देषुं T Be 11; सम्ह्ज्येषुं Be BU. I subjoin the vivaraṇa of this difficult passage as found in my two copies: राजन्यः क्षत्रियः एष षट्त्रिंशत्सु शम्याक्षेपेषु जेतव्योन (read ॰व्येन) गोसहस्रेणावसितः स्थितः तस्मै राजन्याय इषुमस्यतादित्याशिष एनमपराभुतां (sic) मोपरि प्रहार्षीत् (sic) पार्श्वे विध्यतो जित्वा तं दक्षिणापथेन दक्षिणायनमार्गेण नयेति क्षत्रियः पूर्वमेव श्लिष्टो (read संश्लिष्टो) भवति राजपुत्रस्तथेषुमस्यति स त्वा मोपरि क्षिपति तस्मै उत्तरासङ्गेण तमप्रक्षिप्तं (read ॰पक्षि॰ ?) संमृज्य दद्यादिति तथैव संमृज्य प्रयच्छति।

६ om. MT Be 11.

आजिं धावत दुन्दुभीन्समाघ्नताभिषोतारो[१] ऽभिषुणुताग्नीदाग्निरं विनयोलूखलमुदाद्य प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धीति । यथासंप्रैषं ते कुर्वन्ति । धावन्त्याजिसृत । आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाचः । संप्रोदिता[२] वाचो ऽनुमन्त्रयते । शाम्यन्ति घोषाः शंस्ताय । होत्र एषोत्तमेति प्राक्होतुः कालात्पराङावर्तते ऽध्वर्युरभ्येनमाह्वयते होता । प्रत्याह्वयते ऽध्वर्युः । शंसति । प्रतिगृणाति । प्रसिद्धमुक्थ्यं प्रतिगीर्य प्राङेत्योद्यच्छत एतं माहेन्द्रं ग्रहमनूद्यच्छन्त इतरानुपोद्यच्छन्ते नाराशंसानथाश्रावयत्यो आवयास्तु श्रौषडुक्थशा यज सोमस्येति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्ति । द्विर्हुतो माहेन्द्रः परिशेत । आयन्ति रथा । आगतान्रथान्दृष्ट्वा जपति[३] समहमिन्द्रियेण वीर्येण सं मयेन्द्रियं वीर्यमित्यथान्तरेण चात्वालोत्करावुदङुपनिष्क्रामत्युत्तरत[४] एते रथा युक्तास्तिष्ठन्ति । तान्दृष्ट्वैव प्रतिहितो ऽवतिष्ठत्यथ प्रतिहितस्य धनुरादायाधिज्यं[५] कृत्वा रथमातिष्ठति मरुतां प्रसवे जेषमित्याप्तं मन इति कूबरमभिनिश्र-

१ ०समाहताभि० MB.

२ Thus only M; संप्रवदिता T Be 11; in the other MSS. this whole passage is missing.

३ Thus MU Be B; यजंति Be 11 T.

४ ०ष्क्रामत्य० Be BU; ०ष्क्रामंतु० M Be 11 T.

५ ०ादायाप्रज्यं M only.

यजमाने ये देवा यज्ञहनो ऽन्तरिक्षे ऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्य'परं चतुर्गृहीतं गृहीत्वाग्नीध्र एव जुहोति ये देवा यज्ञमुषो ऽन्तरिक्षे ऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्य'थाहवनीयमभिप्रैति यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति। गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाꣳसीत्य'थाहवनीयं हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने ये देवा यज्ञहनो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्य'परं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति ये देवा यज्ञमुषो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहेत्य'थाहवनीयमुपतिष्ठते येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्धयेमꣳ सजातानꣳ श्रैष्ठ्य आधेह्येनमिति' यज्ञहनो वै देवा यज्ञमुषः सन्ति' त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य' ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेतीति ब्राह्मण'मपि वा तिस्र एव गार्हपत्ये जुहोति तिस्र आग्नीध्रे तिस्र आहवनीये' ऽपि वा गार्हपत्याज्जपन्ननुद्रवेदाहवनीयादु'क्रोदवसानीयेष्टिरे'तां[1] तृतीयां प्रवृताहुतिं जुहोति सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानो ऽग्निर्मा पातु चक्षुषः

१ ॰जपन्ननुद्रवेद॰ M Bc; ॰जपन्नुद्रवेद॰ BUG.

स्वाहेत्यथाभिचरन्बभ्रुवे बभ्रुवत्साये कार्श्मर्यमयेन पात्रेण पयो जुहोति मक्ष शूष सवितर्विश्वचर्षण एतेभिः सोम नामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते स्वाहेति । साक्षादस्य हृदयं भित्त्वान्त्राणि परिकाशयातै[1] । स्तृणुते हैव[2] तं[2] भ्रातृव्यमथ येनास्यर्त्विजाꣳ स्पर्धा स्यात्तमाह मास्य चमसमनुप्रसृपतादभिमर्शनं[3] करिष्यामीति । तस्यैतेनैव मन्त्रेण चमसं जुहुयात्तमूर्ध्वो ऽवाङ्वा[4] राजातिपवत । उक्तं पात्नीवतस्य [5]अयणमुक्तमादित्यग्रहस्योद्धननमुक्तं[6] प्रायणीयस्य स्रुवाहुतिरुक्तोदयनीयस्योक्तं यूपस्योपस्थानम् । ॥ २१ ॥ नवमः ॥

उक्तानि पत्नीयजूꣳष्येवमेवैताः स्रुचो यथैतद्ब्राह्मणमुक्तो दधिग्रहो । ऽथ वै भवत्याज्यग्रहं गृह्णीयात्तेजस्कामस्येति । बर्हिषी अन्तर्धायाज्यग्रहं गृह्णाति । सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्येत्यꣳशूनुपसंगृह्य सोमग्रहं गृह्णात्यथैतं महाव्रतीये ऽह्नि प्राजापत्यमतिग्राह्यं गृह्णाति त्वे क्रतुमपि वृञ्जन्ति विश्व इत्यनु-

---

१ Thus M; ०कामयातैच Be; ०क्राशयातीह्ल B; ०काशयान्तैच U; ०काशयातैह्ल G (pr. m.), ०क्राशयातैह्ल G (sec. m.). परिक्राशयातेर्निष्क्रामति (var. निष्क्रामयति) Bhav.

२ Thus M Bhav.; हवैतं The other MSS.

३ Thus M; ०नुप्रसृप्ताद० BUG; ०नुप्रसृत्याद० Be.

४ Thus M; i.s.o. ऽवाङ्वा राजाति० Be U: वाराद्वाष्टाति०; G: वारांद्वाष्टाति; B: वारोद्वाष्टाति० ।

५ Thus (अयण०) M Be (cp. viii. 14 श्रीणाति); अपण० BU; अमण० G.

६ Corrected (उद्धनन०) according to viii. 9 s.f. (उद्धन्ति); उदाहनन० MUGB; Be wholly corr.

ह्रुत्योपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेत्य।थातः प्राणग्रहाणामेव ग्रहणꣳ । संवत्सरꣳ राजानं पुञ्जीकृत्वा[1] नवाꣳशूꣳप्राच आयातयत्ययं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतो रथंतरꣳ रथंतराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्य इत्य।यं दक्षिणा विश्वकर्मेति नव दक्षिणायातयत्य।यं[2] पश्चाद्विश्वव्यचा इति नव प्रतीच आयातयती।दमुत्तरात्सुवरिति नवोदीच आयातयती।यमुपरि मतिरिति नवोपरिष्टात्प्र।दक्षिणं पर्यायातयति । तानपानभृद्भिः प्रत्यूहति प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग ऋषिरिति । वाचयति पितरः पितामहाः परे ऽवर इति ये पुरस्ताद्भवन्ति । दक्षिणा दिशामिति ये दक्षिणतो भवन्ति । प्रतीची दिशामिति ये पश्चाद्भवन्त्यु।दीची दिशामिति य उत्तरतो भवन्त्यू।र्ध्वा दिशामिति य उपरिष्टात्प्र।दक्षिणं पर्यायातिता[3] भवन्ति । ते वा एते प्रायणीयोदयनीययोरेव

---

१ Thus ( पुञ्जी० ) M; पुंजं BG; युजं Be U.

२ Thus M; दक्षिणाश्चायातयत्य० Be GU; B defect.

३ Conjecturally; पर्याशातिता BG; पर्यासातिता M; पर्यतिशातिता U; पर्यैतिशांतिता Be.

नियुक्ता दशमे ऽहꣳस्तदु[1] रात्रिसत्त्रेष्वप्यग्निष्टोम[1] आमयाविन उपसृतो वा गृह्णीयादगदो हैव भवति ' ॥ २२ ॥ दशमः ॥

अथ वै भवत्युभये वा एते प्रजापतेरध्यसृज्यन्तेति ब्राह्मणमेव ' युवꣳ सुराममश्विनेति सौत्रामण्यामेव[2] भवत्यथ वै भवतीयं वा अग्निहोत्रीयं वा एतस्य निषीदति यस्याग्निहोत्री निषीदति ' तामुत्थापयेदिति ' स यस्याग्निहोत्री निषीदति तामुत्थापयत्युदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागं मित्राय वरुणाय चेत्यथ वै भवत्यवर्तिं वा एषैतस्य पाप्मानं प्रतिख्याय निषीदति यस्याग्निहोत्र्युपसृष्टा निषीदति ' तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति ' स यस्याग्निहोत्र्युपसृष्टा निषीदति तामेतदेव दुग्ध्वा ब्राह्मणाय ददाति ' न चास्यात ऊर्ध्वमन्नमत्त्यथ वै भवति पृथिवीं वा एतस्य पयः प्रविशति यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति ' तदभिमन्त्रयेतेति ' स यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति तदभिमन्त्रयते ' यदद्य दुग्धं पृथिवीमसक्त यदोषधीरप्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु पयो वत्सेषु पयो अस्तु तन्मयीत्याह ' पय एवात्मन्गृहेषु पशुषु धत्ते ' ऽप उपसृजत्यद्भिरेवैनदाप्नोतीति ब्राह्मणमथ वै भवति यो वै यज्ञस्यार्तेनानार्तꣳ सꣳसृजत्युभे वै ते तर्ह्यार्च्छेत ' आर्च्छति खलु वा

---

१ Thus M; B and G (sec. m.) om. अपि; तदुरात्रिसत्रेष्वष्टोम U; तदतिरात्रे सत्रे ष्टष्ठ्यस Be; तदुरात्रिसत्रैष्टष्टोम G (pr. m.).

२ एष i.s.o. एव M.

एतदग्निहोत्रं यद्दुह्यमानꣳ स्कन्दति यदभिदुह्यादिति[1] । स यस्याग्निहोत्रं दुह्यमानꣳ स्कन्दति नैनदभिदोग्धि । तदेव यादृक्कीदृक्च होतव्यमथान्यां दुग्ध्वा पुनर्होतव्यमनार्तेनैवार्तं यज्ञस्य निष्करोतीति ब्राह्मणमथ वै भवति यद्युद्द्रुतस्य स्कन्देद्यत्ततो हुत्वा पुनरेयाद्यज्ञं विच्छिन्द्याद्यत्र स्कन्देत्तन्निषद्य पुनर्गृह्णीयादिति । स[2] यत्रैव स्कन्दति तदेव स्थालीं निधायातिशिष्टमानीय पुनरभ्युन्नीय तदेव यादृक्कीदृक्च होतव्यमथान्यां दुग्ध्वा पुनर्होतव्यमनार्तेनैवार्तं यज्ञस्य निष्करोतीति ब्राह्मणमथ वै भवति वि वा एतस्य यज्ञश्छिद्यते यस्याग्निहोत्रे ऽधिश्रिते श्वान्तरा धावति । रुद्रः खलु वा एष यदग्निर्यद्गामन्वत्यावर्तयेद्रुद्राय पशूनपिदध्यादपशुर्यजमानः स्याद्यदपो ऽन्वतिषिञ्चेदनाद्यमग्नेरापो ऽनाद्यमाभ्यामपिदध्याद्गार्हपत्याद्भस्मादायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीयाद्ध्वꣳसयन्नुद्द्रवेदिति । स वैष्णव्यर्चाहवनीयाद्ध्वꣳसयन्नुद्द्रवति । यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ संतनोतीति ब्राह्मणमथ भस्मना शुनः पदमपिवपति शान्त्या इति ब्राह्मणम् ॥ २३ ॥

अथ वै भवति नि वा एतस्याहवनीयो गार्हपत्यं कामयते नि गार्हपत्य आहवनीयं यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचति । दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेदथाग्निमथाग्निहोत्रमिति । स यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचति दर्भेण

---

१ Thus M ; तदभिदु॰ B Be G ; न तदभिदु॰ U.

२ om. Be U.

हिरण्यं प्रबध्य परिकर्मी पूर्वः प्रतिपद्यतेऽन्वग्ब्राह्मण आर्षेय दृध्मेनान्वगात्मनाग्निहोत्रेणाथैतद्धिरण्यमाहवनीयस्यायतने सादयित्वापोद्धृत्य हिरण्यं प्रदक्षिणमावृत्येश्वं प्रतिष्ठापयत्यथ वै भवत्यग्निहोत्रमुपसाद्या तमितोरासीत' व्रतमेव हतमनुम्रियते' ऽन्तं वा एष आत्मनो गच्छति यस्ताम्यत्यन्तमेष यज्ञस्य गच्छति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचति' पुनः समन्य जुहोत्यन्तेनैवान्तं यज्ञस्य निष्करोतीति ब्राह्मणमथ वै भवति वरुणो वा एतस्य यज्ञं गृह्णाति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचति' वारुणं चरुं निर्वपेत्तेनैव यज्ञं निष्क्रीणीत इति ब्राह्मणमथ वै भवति नि वा एतस्याहवनीयो गार्हपत्यं कामयते नि गार्हपत्य आहवनीयं यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेति' चतुर्गृहीतमाज्यं पुरस्ताद्धरेदथाग्निमथाग्निहोत्रमिति ' स यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेति चतुर्गृहीतेनाज्येन परिकर्मी पूर्वः प्रतिपद्यते ऽन्वग्ब्राह्मण आर्षेय दृध्मेनान्वगात्मनाग्निहोत्रेणाथैतदाज्यमाहवनीयस्यायतने सादयित्वापोद्धृत्याज्यमथेश्वं प्रतिष्ठापयत्यथ वै भवति पराची वा एतस्मै व्युच्छन्ती व्युच्छति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेत्युषाः केतुना जुषतां यज्ञं देवेभिरन्वितम्। देवेभ्यो मधुमत्तमꣳ स्वाहेति प्रत्यङ्ङिषद्याज्येन जुहुयात्प्रतीचीमेवास्मै विवासयतीति ब्राह्मणमथ वै भवत्यग्निहोत्रमुपसाद्या तमितोरासीत' व्रतमेव हतमनुम्रियते' ऽन्तं वा एष आत्मनो गच्छति यस्ताम्यत्यन्तमेष यज्ञस्य गच्छति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेति' पुनः समन्य जुहोत्यन्तेनैवान्तं यज्ञस्य निष्करोतीति

ब्राह्मणमथ वै भवति मित्रो वा एतस्य यज्ञं गृह्णाति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्युदेति । मैत्रं चरुं निर्वपेत्तेनैव यज्ञं निष्क्रीणीत इति ब्राह्मणमथ वै भवति यस्याहवनीये ऽनुद्राते गार्हपत्य उद्रायेद्यदाहवनीयमनुद्राप्य गार्हपत्यं मन्थेद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेद्यद्वै यज्ञस्य वास्तव्यं क्रियते तदनु रुद्रो ऽवचरति । यत्पूर्वमन्ववस्येद्वास्तव्यमग्निमुपासीत । रुद्रो ऽस्य पशून्घातुकः स्यादाहवनीयमुद्राप्य गार्हपत्यं मन्थेदिति । स आहवनीयमुद्राप्य गार्हपत्यं मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति । छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयतीति ब्राह्मणमथ वै भवति गार्हपत्यं मन्थति । गार्हपत्यं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते । स यदुद्रायति तदनु पशवो ऽपक्रामन्तीत्यथैनमुपतिष्ठत इषे रय्यै रमस्व सहसे द्युम्नायोर्जे पत्यायेत्यथैनमुपसमिन्द्धे सारस्वतौ त्वोत्सौ समिन्धाताꣳ सम्राडसि विराडसीति । ॥ २४ ॥

अथ वै भवति वज्रो वै चक्रं । वज्रो वा एतस्य यज्ञं विच्छिनत्ति यस्यानो वा रथो वान्तराग्नी यात्याहवनीयमुद्राप्य गार्हपत्यादुद्धरेदिति । स आहवनीयमुद्राप्य गार्हपत्यादग्निमुद्धरति यदग्ने पूर्वं प्रभृतं पदꣳ हि ते सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनुसंभरैतꣳ सं नः सृज सुमत्या वाजवत्येति । पूर्वेणैवास्य यज्ञेन यज्ञमनुसंतनोतीति ब्राह्मणमथैनमुपतिष्ठते त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वत इत्यग्निः सर्वा देवता देवताभिरेव यज्ञꣳ संतनोतीति ब्राह्मणमथाग्नये

पथिकृते पुरोडाशमष्टाकपालं निर्वपत्यन्वाहार्यमासाद्यानड्वाहं ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ वै भवति यस्य प्रातःसवने सोमो ऽतिरिच्यते माध्यंदिनꣳ सवनं कामयमानो ऽभ्यतिरिच्यत इति । स[1] प्रातःसवने सोमे ऽतिरिक्ते प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वंश एव राजानमुन्नय मातिरीरिच इति । होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्सर्वंश एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसाद्यन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्[2] हृत्वा[2] स्तोत्रमुपाकरोति । स्तुवते । तदेतद्गायत्रꣳ साम पञ्चदशं गौर्धयति मरुतामिति धयद्वतीषु कुर्वन्ति । होत्र एषोत्तमेति प्राहुः । समानमत ऊर्ध्वमथ वै भवति यस्य माध्यंदिने सवने सोमो ऽतिरिच्यत आदित्यं तृतीयसवनं कामयमानो ऽभ्यतिरिच्यत इति । स[1] माध्यंदिने सवने सोमे ऽतिरिक्ते प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वंश एव राजानमुन्नय मातिरीरिच इति । होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्सर्वंश एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसाद्यन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् हृत्वा स्तोत्रमुपाकरोति । स्तुवते । तदेतद्गौरिवीतꣳ साम सप्तदशं बण्महाꣳ असि सूर्येत्येतासु[3] कुर्वन्ति । होत्र एषोत्तमेति प्राहुः । समानमत ऊर्ध-

१ om. M.

२ प्रत्यङ्ङाहृत्य Be.

३ Thus M ; एतावत् i.s.o. °एतासु all the other MSS.

सथ वै भवति यस्य तृतीयसवने सोमो ऽतिरिच्येतोक्थ्यं कुर्वीत । यस्योक्थ्ये ऽतिरिच्येतातिरात्रं कुर्वीत । यस्यातिरात्रे ऽतिरिच्यते तं वै दुष्प्रज्ञानमित्यतिरात्रे ऽतिरिक्ते प्राङ्गायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वेष्व एव राजानमुन्नय मातिरीरिच इति । होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्सर्वेष्व एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । तदेतद्बृहत्सामैकविꣳशं वैष्णवीषु शिपिविष्टवतीषु कुर्वन्ति । होत्र एषोत्तमेति प्राहुः । समानमत ऊर्ध्वम् । ॥ २५ ॥

[1]इति नु छन्दोगबह्वृचेषु कामयमानेषु । ते चेन्न कामयेरन्प्रातःसवने ऽतिरिक्ते याꣳ स्थालीमलꣳ राज्ञे ऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति । त्रिरभिविष्यन्दयति । सो ऽभिविष्यन्दमानः सर्व आग्रयणः संपद्यते । तं त्रिरभिहिंकृत्य परिमृज्य सादयति । माध्यंदिने सवने ऽतिरिक्ते तथैव याꣳ स्थालीमलꣳ राज्ञे ऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति । त्रिरभिविष्यन्दयति । सो ऽभिविष्यन्दमानः सर्व एवाग्रयणः संपद्यते । तं तथैव त्रिरभिहिंकृत्य परिमृज्य सादयति । तृतीयसवने ऽतिरिक्ते हारियोजनमेवात्राभिविष्यन्दयति । न हि पुनर्ग्रहणं विद्यते । ऽथातो

---

१ Cp. Rudradatta on Āp. XIV. 18. 13.

ध्रुवस्यैव[1] परिह्वीणस्य[1] सौमाꣳसैन्द्राग्निभ्यामेनमृग्भ्यां परिगृह्य जुहुयादिन्द्राग्नी[2] वै देवानां पुनःपुनरभ्युपाकारं[3] यजामह इत्येतदेकमाश्विनीभ्यामेनमृग्भ्यां परिगृह्य जुहुयादश्विनौ वै[4] देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीत्येतदेकं । वैष्णवीभ्यामेनमृग्भ्यां परिगृह्य जुहुयाद्यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यतिरिच्यत इत्येतदेकमवमृश्यैनैनꣳ सहाभ्यवहरेद्यथा मेऽन्यानि सोमलिप्तानि पात्राण्येवं म एव भविष्यतीत्येतदेकं । बर्हिषैनꣳ सहाभ्युपोषेदेष वा अग्निर्वैश्वानरो यत्प्रदाव्यो । ऽग्नय एष वैश्वानराय गृह्यते । ध्रुव एवमग्नौ वैश्वानरे हुतो भविष्यतीत्येतदपरमथ पुनर्दीक्षते । यज्ञो ह[5] वै[5] यज्ञस्य प्रायश्चित्तिरिति[6] न्वेकाहयाजिनो । ऽथ सत्त्रिणां । मार्जालीये[7] परिष्यन्दं[7] निष्यन्दनवन्तं[7] कृत्वा तदेनं निनयन्ति । श्वो भूते हि ते सोष्यन्तो[8] भवन्ति । ॥ २६ ॥ एकादशः ॥

उक्तः सꣳस्रवो । ऽथ वै भवत्यार्तिं वा एते नियन्ति येषां दीक्षितानां प्रमीयते । तं यदववर्जेयुः क्रूरकृतामिवैषां लोकः

---

१ ध्रुवस्य परिह्वीणस्यैव M.

२ इन्द्रौ i.s.o. इन्द्राग्नी all exc. M.

३ Thus MGU; ॰भ्युपकारं Be; B om. अभि।

४ हि Be.

५ Thus M Be; हैव the other MSS.

६ ॰रितौ again most of the MSS.

७ Thus MB Bhav.; मार्जालीयोपरिविष्यंदनवंतं Be UG (pr. m.); मार्जालीये परिविष्यंदन्निष्यंदनवंतं G (sec. m.).

८ Thus MU; शोष्यंतो Be BG.

स्याद्दाहर दहेति ब्रूयादिति । दीक्षितं चेदुपतपद्विन्देदाग्नीध्रीयग्रयणो[1] ह[2] भवति । तदस्मै भक्षानाहरन्ति यावदलं भक्षाय मन्यते । स यद्यहागदो[3] भवति पुनरैति । यद्यु वै प्रैति सर्वेभ्यो ऽग्निभ्यो ऽङ्गारान्निर्वर्त्यारण्योरग्नीन्समारोह्यान्तरेण चात्वालोत्करावुदङ्कुपनिर्हृत्य तेनैनं दहेयुस्तं चिरात्रेण शीतीकृत्वा संचिनुयुस्ते तथाकृतेन[4] षडहसꣳस्थां[4] काङ्क्षेयुरथ सꣳस्थिते षडहे ऽस्थिकुम्भं[5] याचति । तस्मिन्संचितमवधाय तं दक्षिणतो वेद्यै निधाय सर्पराज्ञिया ऋग्भि स्तुयुरियं[6] वै सर्पतो राज्ञ्यस्या एवैनं परिददति । व्यृद्धं तदित्याहुर्यत्स्तुतमननुशस्तमिति । होता प्रथमः प्राचीनावीती मार्जालीयं परीयाद्यामीरनुब्रुवन्सर्पराज्ञीनां[6] कीर्तयेदिति । तेषां तथा परीतानामध्वर्युर्जघन्यः पर्येत्याथ यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपरियन्ति । तेषां तथा परीतानामध्वर्युः पूर्वः पर्येत्याथैनमादायान्तरेण चात्वालोत्करावश्मानं चास्थिकुम्भं च निधायाङ्गिरवोचत्यप[7] नः शोशुचदघमिति । तस्मिन्मैत्रावरुणाग्रान्ग्रहान्गृह्णन्त्यथातिशिष्टꣳ सत्त्रस्यासते । तस्यावभृथवेलायामस्थिकुम्भं निधायाङ्गिरवोचत्येतद-

१ Thus M; ०ग्नीध्रीयेग्र० the other MSS.

२ om. M.

३ Thus M; यथहाग० Be; यद्युहाग० the other MSS.

४ कृतेनाषड० M Be.

५ स्थि left out by all exc. M.

६ The passage from इयं वै unto यामीरनुब्रुवन् left out by all exc. M.

७ ०वोचंत्यप BG.

वभृथ उ[१] वैवेष[१] भवत्यपि[१] वा[१] यो[१] ऽस्य स्वो[२] नेदिष्ठी स्यात्तस्य स्थाने तं दीक्षयेत्संवत्सरे ऽस्यौनि याजयन्त्यथ[३] वै भवति ॥ २७ ॥

असुर्यं वा एतस्माद्वर्णं कृत्वा पशवो वीर्यमपक्रामन्ति यस्य यूपो विरोहति । त्वाष्ट्रं बहुरूपमालभेतेति । सत्त्रिणां चेद्यूपो विरोहेत्संप्रच्छिद्यास्य[४] चषालं सवनीयस्य त्वाष्ट्रमुपालम्भ्यं कुर्युरपि वा त्वाष्ट्रं ब्रह्मौदनं श्रपयित्वैताः शाखाः प्रवृश्चेयुः प्र वा तक्ष्णुयुरपि वा त्वाष्ट्रीः स्रुवाहुतीर्हुत्वैताः शाखाः प्रवृश्चेयुः प्र वा तक्ष्णुयुरपि वा त्वाष्ट्र[५]त्वष्ट[५] इत्येव[५] ब्रूयादित्यथ वै भवत्यार्तिमेते नियन्ति येषां दीक्षितानामग्निरुद्वायति । यदाहवनीय उद्वायेद्यत्तं मन्थेद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेद्यदाहवनीय उद्वायेदाग्नीध्रादुद्धरेद्यदाग्नीध्र उद्वायेद्गार्हपत्यादुद्धरेद्यद्गार्हपत्य उद्वायेदत एव पुनर्मन्थेदत्र वाव स निलयते । यत्र खलु वै निलीनमुत्तमं पश्यन्ति तदेनमिच्छन्ति । यस्माद्दारोरुद्वायेत्तस्यारणी कुर्यात्क्रुमुकमपिकुर्यादिति । स यस्माद्दारोरुद्वायति तस्यारणी कृत्वा क्रुमुकशकलमन्ववधाय[६] तान्येवावक्षाणानि संनिधाय मन्थेदिति । स तान्येवावक्षाणानि संनिधाय मन्थतीतः प्रथमं जज्ञे

---

१ Thus M; उवेवैष भवत्यपिवायो G; उवैष भवति यो U; इवेवैष भवत्यपिवा यो B; उवैषद्याकतयो Be.

२ All MSS. ins. वा exc. M.

३ याजयत्यथ Be U.

४ Thus MBG; °हेत्संप्रच्छि° Be.

५ Thus M; त्वाष्ट्र' त्वाष्ट्रेत्येव B; त्वाष्ट्रत्वाष्ट्रेत्येव GU; त्वाष्ट्रेत्येव Be.

६ Thus MU Be; क्रुमुकं° BG; अन्ववधाय MUG Be; अन्वाधाय B.

अग्निः स्वाद्योनेरधि जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति । छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयतीति ब्राह्मणम् । ॥ २८ ॥

अथ यद्याहवनीयगार्हपत्यावुद्वायेयातां गार्हपत्यं मथित्वाग्नीध्रीयादाहवनीयमुद्धरेद्यद्याग्नीध्रीयगार्हपत्यावुद्वायेयातां गार्हपत्यं मथित्वाग्नीध्रीयमुद्धरेदथ यद्याग्नीध्रीयाहवनीयावुद्वायेयातां गार्हपत्यादाग्नीध्रीयमुद्धृत्य तत आहवनीयमुद्धरेदथ यदि सर्व[1] एवोद्वायेयुर्गार्हपत्यं मथित्वाग्नीध्रीयमुद्धृत्य तत आहवनीयमुद्धरेदित्यथ वै भवति गार्हपत्यं मन्थति । गार्हपत्यो वा अग्नेर्योनिः । स्वादेवैनं योनेर्जनयति । नास्मै भ्रातृव्यं जनयतीति ब्राह्मणमथ वै भवति यस्य सोम उपदस्येत्सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधूनुयाज्जुहुयादन्यदिति । स यस्य सोम उपदस्यति तत्सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधूनोति मुख्ये चमसेऽन्यदवधाय जुहोति । सोममेवाभिषुणोति सोमं जुहोतीति ब्राह्मणमथ वै भवति सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत्तत्सुवर्णꣳ हिरण्यमभवद्यत्सुवर्णꣳ हिरण्यं कुर्वन्ति प्रिययैवैनं तनुवा समर्धयन्तीति ब्राह्मणमथ वै भवति यस्याक्रीतꣳ सोममपहरेयुः क्रीणीयादेव । सैव ततः प्रायश्चित्तिरिति ब्राह्मणमथ वै भवति यस्य क्रीतमपहरेयुरादाराꣳश्च फाल्गुनानि चाभिषुणुयादित्यादाराः चुद्रहणानि[2] ।

१ सर्वत M.

२ Thus M; चुम्नकल॰ the other MSS.

फाल्गुनानि हैमवतानि । तेषामलाभे श्वेतकानां प्रतिनिधिर्विज्ञायते तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत । तत्पर्णो ऽभवत्तत्पर्णस्य पर्णत्वमिति । तस्मात्पर्णत्वक्षणामेवाभिषवः[1] कार्य इति । शृतेन प्रातःसवनं श्रीणीयादिति । शृतमेतद्भवति । दध्ना मध्यंदिन इति । दध्येतद्भवति । नीतमिश्रेण तृतीयसवन इति । विमथितꣳ सपिलकमुद्धृतं[2] प्राङ्नवनीतभावादित्येतदाचक्षते । ऽग्निष्टोमः सोमः स्याद्रथंतरसामा । य एवर्त्विजो वृताः स्युस्त एनं याजयेयुरिति । त एवैनं याजयन्त्येकां गां दक्षिणां दद्यादित्येकां गामत्र दक्षिणां ददाति । यदिह दास्यन्भवति तदमुत्र ददाति । पुनः सोमं क्रीणीयाद्यज्ञेनैव तद्यज्ञमिच्छति । सैव ततः प्रायश्चित्तिरिति ब्राह्मणमथ वै भवति सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः[3] कामेभ्यः[3] सर्वेभ्य स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते यः सत्त्रायागुरत । एतावान्खलु वै पुरुषो यावदस्य वित्तꣳ सर्ववेदसेन यजेतेत्यतिरात्रं विश्वजितमुपयन्त्यथात्र[4] सर्ववेदसं ददाति । सर्वपृष्ठो ऽस्य सोमः स्यात्सर्वाभ्य एव

---

१ Thus M; ०त्सरूणिसेवाभि० BG; ०त्सरूणिह्येवाभि० U; ०त्सरूणित्वेवाभि० Be.

२ Thus all; are we to read सर्पिस्तक्र० ? सपिलकमप्राङ्नवनी० Be U; सपिलकंमुद्धृतकंप्राङ्वनी० M, but the व seems to be cancelled.

३ om. M.

४ अथ om. M.

देवताभ्यः सर्वेभ्यः कामेभ्यः सर्वेभ्य स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीत इति ब्राह्मणम् । ॥ २९ ॥

पवमानः सुवर्जन इति सौत्रामण्यामेष भवति । ब्राह्मणमुत्तरमथ वै भवति तस्माद्वैश्वदेवेन यजमानः संवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । तस्माद्वरुणप्रघासैर्यजमानः परिवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । तस्मात्साकमेधैर्यजमान इदावत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीत । तस्माच्छुनासीरीयेण यजमानोऽनुवत्सरीणाꣳ स्वस्तिमाशास्त इत्याशासीतेत्यथ वै भवत्यग्नेः कृत्तिकाः शुक्रं परस्ताज्ज्योतिरवस्तादिति नक्षत्रेष्टकाभिर्विकल्पन्त इति ब्रुवते । ऽथ वै भवति यत्पुण्यं नक्षत्रं तद्दक्कुर्वीतोपव्युषमिति[1] । प्रातः कुर्वीत । संगवे कुर्वीत । मध्यंदिने कुर्वीतापराह्णे कुर्वीत । सायं कुर्वीत । यावति तत्र सूर्यो गच्छेद्यत्र जघन्यं पश्येत्तावति कुर्वीत । यत्कारी स्यात्पुण्याह एव कुरुत इति । ब्राह्मणमुत्तरे ब्राह्मणमुत्तरे । ॥ ३० ॥ द्वादशः ॥

## ॥ इति चतुर्दशः प्रश्नः ॥

१ Thus M and Bhav.; तद्दट्कु॰ the other MSS.; the text of T. Br. I. 5. 2. 1. has वषट्कुर्वीत but cp. the comm.

[1]अश्वमेधेन यक्ष्यमाणो भवति राजा विजितो सार्वभौमः । स एतद्देवयजनं जोषयत आश्विनं प्रागाश्विनं दक्षिणाश्विनं प्रत्यगाश्विनमुदक् । छिन्दन्ति वृक्षान्प्र स्थलानि भिन्दन्ति प्रति निम्नान्पूरयन्ति किꣳशारूणि निरस्यन्ति । नदीनां तीर्थानि सर्वतःप्रस्रवणानि पल्वलानि कुर्वन्त्यथैतौ ह्रदौ मध्यतो देवयजनस्य जोषयते सꣳस्राविणावनुपदासिनौ पुण्यनामानौ यद्येवं विन्दन्ति । यद्यु वा एवं न विन्दन्ति खालेनावभिवाह्याभिर्वाभिहार्याभिर्वाद्भिः पूरयन्ति । यथा त्वेव सꣳस्राविणावनुपदासिनौ पुण्यनामानौ भवतस्तथा । तावपरेण मध्यतो देवयजनं जोषयते द्विस्तावद्यथाग्नेर्विधायां । तच्छालां कुर्वन्ति प्राचीनवꣳशां द्विक्षतीकाशां दक्षिणतो वर्षीयसीं । तस्यै दक्षिणतो ऽश्वशालां कुर्वन्ति । तदश्वत्यानाꣳ[2] स्त्रीषाणामवाचीनाग्राणामश्वव्रजं[3] कुर्वन्त्यथास्यैते संभारा उपक्लृप्ता भवन्त्यश्वो ह्रपीयो यो[4] ऽस्य[4] सदश्वानाꣳ सत्तमस्तस्यान्ये ऽपरिमिता

---

१ As all the MSS., with the exception of M, are mostly very corrupted, the text is given according to M; when the reading of M differs from the reading taken up in the text, this is mentioned; but otherwise the various readings of the other MSS. are, as a rule, not given.

२ तदश्वस्थानं M, but cp. Āp. XX. 7. 7.

२ स्त्रीषाणाम॰ M; शिरीसुस्थाम॰ B Be (pr. m.); शिरस्थाम॰ Be (sec. m.); शिरीमहस्माम॰ U.

४ Thus corrected, cp. infra XV. 8 s. f.; यो om. M; यस्य the other MSS.

निरमणा निरष्टाः कृष्णश्च श्वा चतुरक्षो द्वौ दासावनुजायै च पुत्रो ऽन्वाधेयायै च जरत्पूर्वा चैषीकश्चाभ्यूहः सैध्रकं च मुसलं पौꣳश्चलेयश्च[1] चत्वारि शतानि गोमृगाणाꣳ शतं तल्प्यानाꣳ राजपुत्राणाꣳ शतमराज्ञामुग्राणाꣳ[2] शतꣳ सूतग्रामणीनाꣳ शतं क्षत्तसंग्रहीतॄणां चत्वारो महान्त ऋत्विजस्तानन्वितरे तान्काले ऽपदातीन्त्समावहन्ति ॥ १ ॥

आ सुब्रह्मण्यायाश्चतुष्टयीरापो दिग्भ्यः संभृताश्चतुरः[3]साहस्रान्निष्कान्सुवर्णरजतौ च रुक्मौ द्वे अन्ये हिरण्ये द्वौ वीणागाथिनौ ब्राह्मणं च राजन्यं च द्वे रशने मौञ्जीं च कुशमयीं चोभे त्रयोदशारत्न्यावेतेनोपक्लृप्तेन चित्रामायतीमुपरमत्यंद्य[4] चित्रयेत्यरण्योरग्नीन्समारोह्य शालामभिप्रैति ये ते पन्थानः सवितः पूर्व्यासो ऽरेणवो वितता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहीत्युत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य गार्हपत्यमुपतिष्ठते नमो ऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहीति नमो वायवे

१ All MSS. the accus.

२ उग्राणां left out in all the MSS.

३ We would expect here and in the following words also the nomin.

४ Thus M; चय i.s.o. चद्य all the other MSS.; cp. supra p. 145, 3, and infra XVIII. 8, 16.

ऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहीत्यन्वाहार्यपचनं। नमः सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहीत्याहवनीयमथास्यैतत्पुरस्तादेव जघनेनाश्वशालामेकापस्तावं विमितं कारितं भवति। तद्दृथाग्निमुपसमाधाय मृत्यवे स्वाहा मृत्यवे स्वाहेति नवतिमाहुतीर्जुहोति प्रयासाय स्वाहेत्येकादश। शतायुर्वै पुरुषः शतवीर्य आत्मैकशतो यावानेव पुरुषस्तस्मान्मृत्युमवयजत इति ब्राह्मणमथ केशश्मश्रु वापयित्वा लोमानि सꣳहृत्य नखानि निकृत्य दतो धाव्य स्नातावहते वाससी परिदधाते। उभौ मानुषेणालङ्कारेणालङ्कृतौ भवतो ऽहतवाससावथाभ्यां व्रतोपायनीयं पाचयति। तस्याशितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्याथापराह्णे मुखयोर्हिरण्ये अन्वस्येते ॥ २ ॥

सुवर्णं यजमानो रजतं पत्नी रजतानि वा यदि बह्व्यो भवन्त्यथास्य वाचंयमस्य सायमग्निहोत्रं जुहोत्युपसंगच्छन्त एनमेते राजगृहाः सूतग्रामण्यः[1] क्षत्तसंग्रहीतारः कारुविशा[2] इति। तेभ्यः पष्ठौहीं वेहतं ददाति। तां ते पचमाना रमयन्तो जागरयन्त आसते। ऽथ प्रातराचाममाचामन्तौ हिरण्ये प्रोयतस्ते पौꣳश्चलेय आदत्ते। ऽथादित्यमुद्यन्तमुपतिष्ठन्ते द्रष्ट्रे नम उपद्रष्ट्रे नमो ऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमो ऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमो ऽनुशृण्वते नमः

१ Thus B; ग्रामण्यः the other MSS.
२ cp. XVIII. 18.

सते नमो ऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नम इत्यथ वैश्वदेवीꣳ सांग्रहणीं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता चतुष्टयीष्वप्सु ब्रह्मौदनꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां प्राचीं निर्णिज्योपस्तीर्य तस्यामेतꣳ रजतꣳ रुक्मं प्रक्षालितमवदधाति । तस्यामेनमसंभिन्नमिवोद्धरति सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथोपरिष्टात्सुवर्णꣳ रुक्मं प्रक्षालितमवदधात्यथैतान्महत[1] ऋत्विज[1] उत्तरतो ऽनुदिशमुपवेश्य ताननुपूर्वमाचमय्य तेभ्य एनं भूमिꣳ स्पृशन्ननुच्छिन्दन्निवोपोहति । ॥ ३ ॥

स आह ब्राह्मणाश्च राजानश्चानेन माश्वेन मेध्येन स्वस्ति समापयाता[2] ब्रह्मज्यताया[3] इति । [4]तं तथेतीतरे प्रत्याहुरनेन त्वामश्वेन मेध्येन स्वस्ति समापयिष्यामो ब्रह्मज्यताया इत्यथ

---

1 महर्त्विजः M, but cp. supra p. 205. 5.

2 Thus M; समीपयाता the other MSS. I am in doubt whether we ought to read समापयाथाब्रह्मज्यताया (समापयाथ conj.); in this case the avagraha should be read before ब्रह्मज्याताया (line 13); but the following अथ ब्रह्मज्यतामस्मै संजानते seems to plead against this reading.

3 Thus M; ब्र (or ब) ज्यताया all the other MSS.; by this omission of ह्म it is clear that all the MSS., with the exception of M, derive from one common source.

4 This passage left out in all the MSS. exc. M.

ब्रह्मज्यतामस्मै संजानते। ऽथैनान्सꣳशास्ति सकृत्सकृत्प्राश्याप्रत्यवमृशन्तो धारयाध्वा इत्यथैतस्मिन्सर्पिरासेचने रशने संतर्प्य परिकर्मिणे प्रयच्छति। द्विरपरं प्राश्य प्रशꣳसन्ति राद्धस्ते ब्रह्मौदन इति[१]। तेभ्यश्चतुरः साहस्रान्निष्कान्ददाति सुवर्णरजतौ च रुक्मावंत्र ये चत्रस्याभिषेक्तारस्ते ऽध्वर्युमभिषिञ्चन्ति। स आह ब्राह्मणाश्च राजानश्चाध्वर्युरेतौ द्वौ संवत्सरौ राजा भविष्यति तस्य शुश्रूषध्वं यो ह्यस्य[२] न शुश्रूषिष्यते सर्वस्वं तं[३] ज्यास्यन्तीत्यथाध्वर्युरेतौ द्वौ संवत्सरौ राजा भवति। यजमान इतीतरमाचक्षते। स आह ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति। बधानेतीतरः प्रत्याह देवेभ्यः प्रजापतये तेन राध्नुहीति। ॥ ४ ॥ प्रथमः ॥

अथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयत इमामगृभ्णन्रशनामृतस्येति। तयाश्वमभिदधात्यभिधा असि भुवनमसि यन्तासि धर्तासि सो ऽग्निं वैश्वानरꣳ सप्रथसं गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड् यन्तासि यमनो धर्तासि धरुण इत्येवमेव द्वितीयाꣳ रशनामादत्ते। तयैवमेवाश्वमभिदधाति। ते अश्वस्यानुपृष्ठमनुपृणक्त्यैतस्मिन्काले ऽनुजायै च पुत्रो ऽन्वाधेयायै च श्वबन्धाभ्याꣳ श्वानमभिधत्तो। ऽथैष पौꣳश्चलेयो जरत्पूर्वया

---

१ This passage ( cp. 207. 12 ) left out in all the MSS. exc. M.

२ स्य om. M.

३ तत् Be, त M; UB om. this passage.

सव्यं जानु वेष्टयित्वा सैध्रकेण मुसलेन स्थानमनूपतिष्ठते । ऽथाध्वर्युः पुरस्तात्प्रतिपद्यते सह शतेन तल्प्यानाꣳ राजपुत्राणां । ब्रह्मा दक्षिणतः सह शतेनाराज्ञामुग्राणाꣳ । होता पश्चात्सह शतेन सूतग्रामणीनाम् । उद्गातोत्तरतः सह शतेन क्षत्तसंग्रहीतॄणां । मध्ये ऽश्वः श्वा च । अथ दक्षिणꣳ ह्रदमभिप्रयान्ति । शौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैरा क्रोडादश्वमभिधावयन्ति[1] । तमध्वर्युः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायꣳ राजा वृत्रं वध्यादिति । तस्यानु प्रोक्षणꣳ शतं तल्प्या राजपुत्राः प्रोक्षन्ति । ब्रह्मा दक्षिणत उदङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायꣳ राजाप्रतिधृष्यो ऽस्त्विति । तस्यानु प्रोक्षणꣳ शतमराजान उग्राः प्रोक्षन्ति । होता पश्चात्प्राङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायꣳ राजास्यै विशो बहुग्वै बह्वश्वायै बह्वजाविकायै बहुव्रीहियवायै बहुमाषतिलायै बहुहिरण्यायै बहुहस्तिकायै बहुदासपुरुषायै रयिमत्यै पुष्टिमत्यै बहुरायस्पोषायै बहुसर्वधनायै राजास्त्विति । तस्यानु प्रोक्षणꣳ शतꣳ सूतग्रामण्यः[2] प्रोक्षन्त्युद्गातोत्तरतो दक्षिणामुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायꣳ राजा सर्वमायुरेत्विति । तस्यानु प्रोक्षणꣳ शतं क्षत्तसंग्रहीतारः प्रोक्षन्ति । दिग्भ्यो ऽश्वꣳ समुक्षन्तीति ब्राह्मणम् । अथास्यैष पौꣳश्चलेयः सꣳश्लिष्टो भवति यदा लोपमी-

१ ०धापयंति M.

२ Thus BU; ०ण्यः M Bo.

वाम्यथ शुनः प्रहरामीत्युपमीवत एष पौꣳश्चलेयः सैध्रकेण मुसलेन शुनः प्रहन्ति तमत एवानुमन्त्रयते ॥ ५ ॥

यो अर्वन्तं जिघांसति तमभ्यमीति वरुण इति तमश्वस्याधस्तादुपास्य दक्षिणापन्नावयति परो मर्तः परः श्वेत्यथास्य ब्रह्मा हस्तं गृह्णाति ब्रह्मणो वा यजमानो ऽहं च त्वं च वृत्रहन्त्संबभूव सनिभ्य आ । अरातीवा चिदद्रिवो ऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातय इत्यथैतमैषीकमभ्यूहं मौञ्जीभ्यांꣳ रज्जुभ्यामन्तयोरभिदधाति तत्सह वेतसशाखोपसंबद्धा भवति तदेतेन शतं तस्या राजपुत्रा विविच्यन्ते तेषामनु विवेकमितरे द्वे अन्यतरमन्तꣳ शते गृहीतो द्वे अन्यतरमन्तꣳ शते अथैनान्सꣳशास्त्यनेनैषीकेणाभ्यूहेनाभ्युदूहन्त[1] इव पुरस्तात्प्रत्यञ्चमूर्मिणाश्वमभिधावयाता[2] इत्यभिधाव्यमाने[3] ऽध्वर्युर्यजमानं वाचयत्यभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानꣳ रजाꣳसि । स्वेना हि वृत्रꣳ शवसा जघन्थ न शत्रुरन्तं विविदद्युधा त इत्यथैनꣳ संवेष्ट्य दक्षिणापन्नावयत्यथैतमश्वं प्रदक्षिणमावर्त्य शालामानयति यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम् । एतꣳ स्तोतरेतेन पथा पुनर-

---

१ °भ्यूहंत MSS. exc. M.

२ °भिधापयाता M ; °धावयंता the other MSS. ; if अभिधावयाता is the correct reading we have here a form of the same kind as समापयाता (supra p. 207, 12).

३ °धाप्यमाने again M.

श्वमावर्तयाषि न इति । तमध्वर्युः पूर्वाभि स्तोकीयाभिरन्वेत्यग्नये स्वाहा सोमाय स्वाहेत्येतेनानुवाकेन पुनःपुनरभ्युपाकारं यावदस्य स्तोका उपरमन्त्यथैतमश्वमग्रेण शालां प्राञ्चं स्थापयित्वा प्रपद्याश्वस्य सावित्राणि जुहोत्यग्नये स्वाहा वायवे स्वाहेति सन्ताय सावित्रमष्टाकपालं प्रातर्निर्वपत्यासाद्य पुरस्ताद्भागाञ्जुहोत्यग्नये[1] स्वाहा स्वाहेन्द्राग्निभ्यामिति पञ्च । पुरस्तात्स्विष्टकृतस्त्वयोऽग्नीतिमश्वचरितान्युपजुहोतीङ्काराय स्वाहेङ्कृताय स्वाहेत्यंसमुदिते त्रयोदश प्रद्रावाञ्जुहोत्यायनाय[2] स्वाहा प्रायणाय स्वाहेति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथैतमश्वं प्रदक्षिणमावर्त्य पूर्वया द्वारा शालां प्रपाद्यान्तर्वेदि प्राञ्चं स्थापयित्वाह ॥ ६ ॥

यद्वा इदमाहुः पदेपदे ह वा अश्वस्य मेध्यस्याध्वर्युर्जुहोतीहैव वयं तद्धोष्यामो यथा नः पदेपदे हुतं भविष्यतीति । तस्य पत्सु धृतीर्जुहोत्यक्ष्णया वा पर्यारिणीर्वेह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहेत्यथैनं प्राञ्चमुत्क्रामय्य प्रोक्षति प्रजापतये त्वेति पुरस्तादिन्द्राग्निभ्यां त्वेति दक्षिणतो वायवे त्वेति पश्चाद्विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतो देवेभ्यस्त्वेत्यधस्तात्सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टादथैनमतिप्रोक्षेण प्रोक्षति कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा

१ ०भागाजुहो० M.　　२ प्रद्रवां MSS., but cp. infra 214, 9.

विश्वेभ्यस्त्वा भूतेभ्य इत्यथास्य[1] रूपाणि जुहोत्यञ्ज्येताय स्वाहाञ्जिसक्थाय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्येताभ्यामनुवाकाभ्यामथास्योपोत्थायाश्वनामभिर्दक्षिणं कर्णमाजपति विभूर्मात्रा प्रभूः पित्राश्वो ऽसि हयो ऽस्यत्यो ऽसि नरो ऽस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा असि ययुर्नामासीत्यथैनमुपतिष्ठत आदित्यानां पत्वान्विहीत्यथैनꣳ रशनाभ्यामुत्सृजति भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्य इत्यथैनं देवताभ्यः परिददाति देवा आशापाला एतं देवेभ्यो ऽश्वं मेधाय प्रोक्षितं गोपायतेत्यथास्मा एतानपरिमितान्निरमणान्निरष्टानुपावसृजन्त्यथैनमेतानि चत्वारि शतानि गोप्तृणामनुयुञ्जते प्रास्तकवचा विततवरूथा यथा युद्धाय तथा[2] । तेभ्यः पक्वाशनं प्रसौति । ॥ ७ ॥

स आह ब्राह्मणाश्च राजानश्च यस्येमे पक्वाशनमुपावहरिष्यन्ते मयाप्रसूता मोपवादिष्टेति । स आह ब्राह्मणाश्च राजानश्च बहिर्देवयजनादाहवनं व्युदचध्वं यस्यायं वडवाभिः सꣳसृज्यते सर्वस्वं तं ज्यास्यन्तीति । ते बहिर्देवयजनादाहवनं व्युदचन्ते[3] । ऽश्वैश्चैव साण्डैस्तरन्त्यश्वतरैश्च । न वडवाभिर्ना-

---

१ The passage अथास्य up to श्वेताय स्वाहेत्येताभ्यामनुवाकाभ्याम् left out in all exc. M.

२ Thus M, which, however, omits तथा ; all the other MSS. are wholly corrupted.

३ Thus M; व्यदचंति Be; व्युदंचंति U; व्युदंचं B.

श्वतरीभिरथैतौ[१] वीणागाथिनावतिप्रगल्भीतौ[२] ऽथैष ब्राह्मणो वीणागाथी गायतीत्यददा इत्ययजथा इत्यपचथा इत्येवं मिश्रास्तिस्रो गाथाः । कामचारो ऽश्वस्य । स्नानाद्येवैनं गोपायन्ति वाहनाद्याथ यद्यश्वमुपतपदिन्दत्याग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो ऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुरित्यथ यदि नावगच्छत्यग्नये वैश्वानराय द्वादशकपालो मृगाखर इत्यथ यदि वडवाभिः सꣳसृज्यते ऽग्नये ऽꣳहोमुचे ऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागो । यद्यभिवाति रौद्रो । यदि स्रावः पौष्णो । यद्यप्सु वारुणो । यदि काणः[३] सौर्यं । एतासामार्तीनां यां कां[४] च[४] न्येति[४] । सकृत्त्वेव[५] प्रायश्चित्तिरथ यो ऽस्य[६] सदश्वानाꣳ सत्तमस्तमुत्सृजत्यथातो रशनाभ्यामेव प्रतिपद्यते । समानं कर्म परिदानात् । ॥ ८ ॥ द्वितीयः ॥

उत्सृज्याश्वं वैश्वदेवान्पशूनालभन्ते । तेषां पशुपुरोडाशाननुवर्तन्ते वैश्वदेवहवीꣳषि । वैश्वदेवहवीꣳषि वैवैषां पशुपुरोडाशा भवन्ति । ताननुवर्तते मध्यमा सावित्री[७] । प्रसिद्धाः[८]

---

१ °थैनौ M.

२ Thus M; U om. प्र; Be B: °नावितिप्रगल्भीतौ; the expression occurs also in the gṛhyasūtra I. 15.

३ काणः M; कारणः the other MSS.; but cp. Āp. xx. 7. 18.

४ कांचिन्न्येति M.

५ Uncertain; सकृत्वेव M Be; सुत्वेव B; सकृदेव U.

६ श्वस्य M.

७ Thus M; सावित्र्याः BU; सावित्राः Be.

८ Instead of प्रसिद्धः or प्रसिद्धाः as the other MSS. have it here and infra, M consequently प्रसिद्धं, but cp. the expression प्रसिद्धेष्टिः संतिष्ठते ।

पशवः संतिष्ठन्ते। ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति। सा प्रसिद्धेष्टिः संतिष्ठते। ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते। ऽथैतौ वीणागाथिनावतिप्रगृह्णीतो। ऽथैष राजन्यो वीणागाथी गायतीत्यजिना इत्ययुध्यथा इत्यमुꣳ संग्राममहन्नित्येवं मिश्रास्तिस्रो गाथाः। प्रातरग्निहोत्रे हुते ब्राह्मणो वीणागाथी गायति सायमग्निहोत्रे हुते राजन्यस्तावेवमेव संवत्सरं गायतो। ऽथ सावित्रमष्टाकपालं प्रातर्निर्वपत्यासाद्य पुरस्ताद्भागाञ्जुहोत्यसमुदिते[1] धृतीश्च जुहोति प्रद्रावाꣳश्च[2] जुहोति। सा प्रसिद्धेष्टिः संतिष्ठते। ऽथ मध्यंदिने सवित्रे प्रसवित्रे पुरोडाशमेकादशकपालं निर्वपति। सा प्रसिद्धेष्टिः संतिष्ठते। ऽथापराह्णे सवित्र आसवित्रे द्वादशकपालं निर्वपति। सा प्रसिद्धेष्टिः संतिष्ठते। ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते। स एवमेव सावित्रीभिरहरहर्यजमानश्चतुरो मास एति काममिष्ट्या कामं पशुबन्धेन कामं यवाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु सावित्र्येष्ट्वा वरुणप्रघासान्पशूनालभन्ते। ॥ ९ ॥

तेषां पशुपुरोडाशाननुवर्तन्ते वरुणप्रघासहवीꣳषि। वरुणप्रघासहवीꣳषि वैवैषां पशुपुरोडाशा भवन्ति। ताननुवर्तते मध्यमा सावित्री। प्रसिद्धाः पशवः संतिष्ठन्ते। ऽथापराह्णे

---

१ °ताद्भागाञ्जुहो° M as above, p. 211, 6.

२ Thus M; प्रद्रवांश the other MSS.; the value of the word is उद्द्रावः।

सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते । ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते । स एवमेव सावित्रीभिरहरहर्यजमानो ऽपराꣳश्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामꣳ श्यामाकाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु पौर्णमास्या उपवसथ आनीकवतं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तत आनीकवतꣳ हविरानीकवतो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते प्रथमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथ मध्यंदिने सांतपनं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तते सांतपनꣳ हविः । सांतपनो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते मध्यमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ सायं गृहमेधीयेन चरत्यथापररात्रे पूर्णदर्व्येण[1] चरत्यथ प्रातः क्रैडिनं पशुमालभते । तस्य पशुपुरोडाशमनुवर्तते क्रैडिनꣳ हविः । क्रैडिनो वैवास्य पशुपुरोडाशो भवति । तमनुवर्तते प्रथमा सावित्री । प्रसिद्धः पशुः संतिष्ठते । ऽथ मध्यंदिने साकमेधान्पशूनालभन्ते[2] । ॥ १० ॥

---

१ पूर्णदर्वेण all, but cp. vol. I, p. 142. 5 ; Āp. has also पूर्णदर्व्ये, but the S'at. Br. पूर्णदर्वे ; the word occurs again xvii. 57 and in the Dvaidha ; Bhav. in his comm. on the latter has ॰दर्वे ।

२ लभंते MU Be ; लभते B.

तेषां पशुपुरोडाशाननुवर्तन्ते महाहवीꣳषि। महाहवीꣳषि वैवैषां पशुपुरोडाशा भवन्ति। ताननुवर्तते मध्यमा सावित्री। प्रसिद्धाः पशवः संतिष्ठन्ते। ऽथापराह्णे पितृयज्ञेन चरति। पितृयज्ञेन चरित्वा त्रैयम्बकैश्चरति। त्रैयम्बकैश्चरित्वादित्यं पशुमालभते। तस्य पशुपुरोडाशमनुवर्तत आदित्यꣳ हविरादित्यो वैवास्य पशुपुरोडाशो भवति। तमनुवर्तत उत्तमा सावित्री। प्रसिद्धः पशुः संतिष्ठते। ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयते। ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते। स एवमेव सावित्रीभिरहरहर्यजमानो ऽर्धचतुर्थान्मास एति काममिष्ट्या कामं पशुबन्धेन कामं व्रीह्याग्रयणेनाथामावास्याया उपवसथीये ऽहन्सावित्र्येष्ट्येष्टाग्निकानि सावित्राणि हुत्वोखाः संभृत्य पशुशीर्षाणि च वायव्यं पशुमालभते[1]। तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति। तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति। तावनुवर्तते मध्यमा सावित्री। प्रसिद्धौ पशू संतिष्ठेते। अथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति। सा प्रसिद्धेष्टिः संतिष्ठते। ऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते। स एवमेव सावित्रीभिरहरहर्यजमान एतमर्धमासमेति काममिष्ट्या कामं पशुबन्धेनाथ चतुर्षु मासेषु पर्यवेतेषु सावित्र्येष्ट्वा ॥ ११ ॥

शुनासीरीयान्पशूनालभन्ते[1]। तेषां पशुपुरोडाशाननुवर्तन्ते शुनासीरीयहवीꣳषि। शुनासीरीयहवीꣳषि वैवैषां पशु-

---

१ °लभंते M, °लभते the other MSS.

पुरोडाशा भवन्ति । ताननुवर्तते मध्यमा सावित्री । प्रसिद्धाः पशवः संतिष्ठन्ते । ऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते चातुर्मास्याः पशवः संतिष्ठन्ते सावित्र्यः ।

॥ १२ ॥ तृतीयः ॥

अथाश्वशालायामश्वं निग्रथ्नन्त्यथैनं तीर्थादानीय पवयित्वा चित्रविषमग्निदीक्षणीयामिष्टिं निर्वपति । तस्यै तावन्त्युत्सीदन्ति यावन्ति दीक्षणीयाया । अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङुद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पूर्वाणि वैश्वदेवानि जुहोति स्वाहाधिमाधीताय स्वाहेत्यथ सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहेत्येकविंशिनीं दीक्षां जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति । पञ्चाध्वरदीक्षाहुतीर्जुहोति[1] षडग्निदीक्षा एकामृतुदीक्षां भुवो देवानां कर्मणेति । सप्ताहान्येतयेष्ट्या यजत इति । स त्रीणित्रीण्येव पूर्वाणि वैश्वदेवानि जुहोत्युत्तरामुत्तरामृतुदीक्षां । द्वे[2] अन्तत[2] ऋतुदीक्षे[2] जुहोति महीमू षु सुत्रामाणमित्येतदे-

१ Thus M, °दीक्षाजुहोति the other MSS.

२ Thus M; तेद्वेतटेक्तु° Be; वेद्वतटक्तु° U; तेद्वतदतु° B.

वाहर्दीचते ' संवत्सरमुख्यं[1] बिभर्ति ' द्वादशोपसदो ' ऽथैनमेता यथाम्नातं विशः पर्यवस्यन्ति ' नेदीय एनमेते[2] कर्मकृत उपसंगच्छन्ते तक्षाणश्च रथकृतश्च[3] मयस्कृतश्च[3] कुलालाश्च द्वयाः कर्मारा नखकृतः सप्तमे ' ऽथैताꣳस्तक्ष्णः सꣳशास्ति ॥ १३ ॥

एकशतं बैल्वानि दार्वाचितानि छिन्दत[4] तानि प्रवकलानि कृत्वाचायं[5] चिनुतैकविꣳशतिं यूपाञ्छिन्दतैकविꣳशत्यरत्नीन्[6] राज्जुदालमग्निष्ठं पौतुद्रवावुपस्थावानौ षड् बैल्वान् षट् खादिरान् षट् पालाशान्पालाशमुपशयं पालाशं पात्नीवतं पालाशं विशालंयूपमेकतयानि दारुमयाणि पात्राणि कुरुत षट्त्रिꣳशतꣳ स्रुवान्दीर्घदण्डान् षट्त्रिꣳशतमनुवेषान्दीर्घदण्डाꣳश्चत्वारि[7] वाष्टौ वेन्द्राणसानि चतुश्चक्राणि बृहच्चक्राणि यथा समानि यूपाग्रैः स्युरपरिमितान्यारोहणमहानसानि कुरुतैकं वैतसं कटं कुरुताश्वस्योपस्तरणायेत्यथैतान्रथकृतः सꣳशास्ति

---

१ ॰मुखां M.

२ एवमेवे M.

३ ॰कृताश्चामयस्कृ॰ M; ॰कृताश्चायस्कृ॰ Be; the other MSS. are defective; cp. infra 219, 1.

४ Thus M (we expect छिन्त), छिंदंति the other MSS.

५ Uncertain; कृत्वारचायां M; कृत्वावयायं BU; कृत्वावचायं Be (pr. m.), कृत्वाचायं Be (sec. m.?); cp. infra xv. 19 (223, 19).

६ Thus M; ॰त्यरत्निं the other MSS.

७ Thus (only ॰वेषां॰) M; षट्चिंशतं दर्वीं दीर्घदंडाश्च॰ UBe; B om. these words. What is meant by अनुवेष I do not see. Read perhaps ॰शतं दर्वीर्दीर्घदण्डाश्च॰; cp. p. 224, 8.

स्वरथं कुरुतापरिमिताञ्चयान्कुरुतेत्यथैतान्मयस्कृतः सꣳशास्त्यपरिमितं चर्मण्यं कुरुतेत्यथैनान्कुलालान्सꣳशास्ति यथैकविꣳशतिविधायाग्नय एवमिष्टकाः कुरुत तिस्रो महतीः कुम्भीः कुरुत यथाश्वं तूपरं गोमृगमित्येतान्साङ्गान्क्लृपयेयुरपरिमिता स्थालीः कुरुतेति ॥ १४ ॥

अथैतान्कालायसकृतः सꣳशास्ति सायकं कुरुत सिन्तिमंकल्पोदकं[1] कृष्णं कृष्णत्सरुꣳ सुवर्णꣳ सुवर्णत्सरुं चतुरः कालायसान्लोहायसत्सरूꣳश्चतुरो लोहायसान्कालायसत्सरून्षट्त्रिꣳशतꣳ सुवर्णान्रजतत्सरून् षट्त्रिꣳशतꣳ रजतान्सुवर्णत्सरूꣳस्त्रीणि च शतानि त्रयस्त्रिꣳशतं च सौवर्णानाꣳ सूचीनां त्रीणि च शतानि त्रयस्त्रिꣳशतं च राजतानां त्रीणि च शतानि त्रयस्त्रिꣳशतं च सीसानामेकं कालायसस्य कमण्डलुं कुरुताश्वतेजन्यै अपणायेत्यथैतान्सुवर्णकृतः सꣳशास्ति परःशतꣳ शतपलान्निष्कान्कुरुत सुवर्णरजते महिम्नोः पात्रे कुरुतैकतयानि सौवर्णानि पात्राणि कुरुत यावत्यः पत्नयस्तावतः[2] सौवर्णानुपशयान्कुरुत रजतग्रन्थीन्राजतान्वा सुवर्णग्रन्थीन्यावत्यः पत्नयस्तावन्ति[3] सौवर्णानि कुम्बकुरीराणि कुरुत रजतशङ्कूनि राजतानि वा सुवर्णशङ्कूनि यावत्यः पत्नयस्तावतः[4] सौवर्णान्क-

१ I have simply accepted the reading of M; if it is correct, I do not see; सत्विमगुल्फोदकं Be B; सत्विमगल्फादकं U.

२ पत्न्यः MSS., but cp. Āp. xx. 157 and infra.

३ पत्न्य० MBU; पत्नय० Be.

४ पत्न्य० all.

मण्डलून्कुरुत रजतराशान्राजतान्वा सुवर्णराशानेकꣳ सौवर्णं विधवनं कुरुत त्रीणि सौवर्णानि धवित्राणि कुरुत रजतदण्डानि राजतानि वा सुवर्णदण्डानि सहस्रꣳ सौवर्णान्काचान्कुरुत सहस्रꣳ राजतान्सहस्रꣳ सामुद्रान्हिरण्मयं कशिपु[1] हिरण्मयं[2] षड्वीशꣳ[2] हिरण्मयꣳ[2] संदानमिति[2] । ॥ १५ ॥

अथैतानखण्डतः[3] सꣳशास्त्यपरिमितान्यष्टमानि कुरुतेत्यथास्यैतान्यन्यान्युपक्लृप्तानि भवन्ति शतं घृतचर्माणि शतं मधुचर्माणि शतं तण्डुलचर्माणि शतं पृथुकचर्माणि शतं लाजाचर्माणि शतं करम्भचर्माणि शतं धानाचर्माणि शतꣳ सक्तुचर्माणि शतं मसूस्यचर्माणि शतं प्रियङ्गुतण्डुलचर्माणीत्यथास्यैत एकविꣳशतिः प्रतिप्रस्थातारः सꣳशिष्टा भवन्त्यात्मना द्वाविꣳशस्ते[4] जनपदेभ्यः पशून्समचन्ति[5] तयारूपान्ययारूपाꣳस्ते विदुर्ग्रामेषु ग्राम्यानचन्त्यरण्य आरण्यान्गिरिषु गैरेयान्नदीषु नादेयान्यप्सरेषु वयाꣳसि कुम्भीषु सरीसृपानिति । ॥ १६ ॥ चतुर्थः ॥

प्रसिद्धः[6] संनिवापो । ऽथ प्रायणीयेन चरति । प्रायणीयेन चरित्वा पदेन चरति । पदेन चरित्वार्षभे चर्मन्सहस्रेण

---

१ ॰पुं M.

२ Thus M; हिरण्मयं विंशं हिरण्मयं संदानानीति BU Be (pr. m.); हिरण्मयमुपबर्हणं षट्चिंशं हिरण्मयं संदानानीति Be (sec. m.).

३ Thus M; ॰तानखंडतः the other MSS.

४ ॰विंशतिस्ते M.

५ Thus M; समवंति the other MSS.

६ प्रसिद्धं M.

राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्याथान्वहं प्रवर्ग्योपसद्भ्यां प्रचरति । द्वादशाह एवैष । एकविꣳशतिविधो ऽग्निर्निधीयते । तस्यैकविꣳशतिच्छदिः सदो भवत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय सदोहविर्धाने संमिनोति । सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्यावृता यूपमुच्छ्रयति । स्वर्वन्तꣳ रज्जुदालमग्निष्ठमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति । तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्गृहीत्वाथ पशुपुरोडाशं निर्वपति । तमनुवर्तन्ते ऽष्टौ देवसुवाꣳ हवीꣳष्यग्नये[1] गृहपतय[1] इत्येतान्यग्नये[1] गायत्रायेत्येषा च दशहविरिष्टिस्तस्या एता याज्यापुरोनुवाक्या भवन्ति समिद्दिशामाशया नः सुवर्विदितीडान्ताः पशुपुरोडाशाः संतिष्ठन्ते । पत्नीसंयाजान्ताः पशुर्हृदयशूलान्त इत्येके । ऽथ वसतीवरीः परिहृत्य पयाꣳसि विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्ते । समानं कर्म परिधीनां[2] परिधानात्परिधिष्वनुवर्तयति कस्त्वा युनक्ति स त्वा युनक्त्विति षण्मध्यमे षड् दक्षिणार्ध्ये पञ्चोत्तरार्ध्ये । ऽथ राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति । परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यङ्गिरुदैत्यग्निष्टोमं क्रतुमुपैति । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्म पवमानात्पवमानꣳ स्तुष्यन्याचक्षति बर्हिस्व शतपलं चाथाहोद्गात-

---

१ अग्नये गृ॰ इत्येतानि om. M.

२ परिधि M.

बर्हिंश्च ते शतपलं चाश्वो म उद्गायत्विति । ते ऽश्वस्य वालधिꣳ समन्वारभन्ते ऽग्निस्ते वाजिन्युङ्क्तु त्वारभे स्वस्ति मा संपारय वायुस्ते वाजिन्युङ्क्तु त्वारभे स्वस्ति मा संपारयादित्यस्ते वाजिन्युङ्क्तु त्वारभे स्वस्ति मा संपारयेत्यथोद्यन्तो ऽभि[१] पवमानꣳ सर्पन्त्युत्तरत एष वडबाव्रज उच्छ्राय्या परिश्रितो भवति । तं विवृण्वन्त्यभ्यश्वं वडबाः क्रन्दन्त्यभ्यश्वो वडबाः क्रन्दति । सो ऽश्वस्योद्गीथस्तत्पुण्या वाचः संप्रवदन्ति । ॥ १७ ॥

उदगासीदा अयमश्वो मेध्य आयुरुदगासीत्सुभूतमुदगासीद्ब्रह्मवर्चसमुदगासीदिदमुदगासीदिदमुदगासीदिति पुण्या वाचः संप्रवदन्त्युत्सृजन्ति वडबा । अश्वशालायामश्वं निग्रह्णन्त्यत्रास्मा आसुकुम्भिकमन्नमुपकिरन्त्यथाहोद्गातर्धेनुशतं[२] च ते शतपलं च त्वं म उद्गायेति । तस्य चतसृषु बहिष्पवमानो[३] । ऽष्टास्वष्टास्वाज्यानि[३] । द्वादशो माध्यंदिनः पवमानः । षोडशानि पृष्ठानि । सविꣳश[४] आर्भवः[४] पवमानश्चतुर्विꣳशमग्निष्टोमसाम । तं चतुष्टोम इत्याचक्षते । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्यैति । स्वर्वन्तꣳ रज्जुदा-

---

१ भि all.

२ Thus (°आसुकुम्भिकमंनसु°) M; °आकुकमंडिनसु° the other MSS.

३ Thus corrected, cp. infra xviii. 34 and S'at. Br. xiii. 5. 1. 1. °पवमानोष्टाष्टा न्याज्यानि, with स्वा above the lacuna, M; °पवमानेष्टाष्टान्याज्यानि BU; °पवमानोऽष्टाष्टान्याज्यानि Be.

४ Thus M; संविंशतिरार्भवः BU; विंशतिरार्भवः Be; cp. infra l.c.

त्वमग्निष्ठमुत्सृज्यैकादशिनान्पशूनुपाकरोति । तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ् यज्ञः संक्रामत्विति । तृतीयं दक्षिणानां ददाति । वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदिति । नात्राभ्यभिषेको । ऽहीनसंततिं करोत्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति[1] । तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो । नाना दिश इत्येके । समानं कर्मा पत्नीसंयाजेभ्य । उपकाश एवैषो ऽग्निष्टोमश्चतुष्टोमः संतिष्ठते पत्नीसंयाजान्तः । ॥ १८ ॥ पञ्चमः ॥

अथास्यैतानि शतमौक्षाणि चर्माण्युपस्तीर्णानि भवन्त्युत्तराꣳ श्रोणिमुत्तरेण पञ्चसꣳहितान्यथैतेषां घृतचर्मणां विꣳशतिं वा चतुर्विꣳशतिं वापोद्धृत्याथेतरैरन्नानि संप्रयुवन्त्यथैतेषां दार्वाक्षितानां विꣳशतिं वा चतुर्विꣳशतिं वा मध्ये ऽग्नेरचायं[2]

---

१ चरंति M.

२ Thus M; ग्नेरचाश्च BU; ग्नराचमं Be.

च्छित्वाथेतराणि[1] संछिद्यसंछिद्यैव संप्रकिरन्ति । तदेतां चतुरश्रां देवपुरमध्यात्ममायातयत्यपि वा पक्षपुच्छानभिनिरूहति[2] यथा समावती यूपाग्रैः स्यादथैनाꣳ[3] समुच्छ्रित्य[3] परिश्रयन्ति । तस्योदीचीं द्वारं कुर्वन्ति । तदेतानीन्द्राणसान्युपवर्तयन्ति चत्वार्यनुदिशमवान्तरदिशास्वितराणि यद्यष्टौ भवन्ति । तेषां चत्वारश्चत्वार एकैकमधिरोहन्ति दशान्ये रात्रिकर्मिणो ऽथैभ्य स्थालीभिराज्यान्यभिहरन्त्यष्टमैरन्नान्यथाध्वर्युरादत्ते[4] स्रुवं च दीर्घदण्डं दर्विं[5] च दीर्घदण्डामाददत एकविꣳशतिं[6] प्रतिप्रस्थातारो दशान्ये रात्रिकर्मिणो । ऽथाध्वर्युः स्रुवेणाज्यस्योपहत्य त्रीणि पूर्वाणि वैश्वदेवानि जुहोति । स्वाहाधिमाधीताय स्वाहेति स्रुवैरेवाज्यानां जुह्वति दत्वते स्वाहेति दर्वैरन्नानामदन्तकाय स्वाहेति । त एवमेवैतमनुवाकं । यदैतस्यानुवाकस्य पारं यन्त्यथैतेनानुवाकेन व्यवदधाति । ॥ १९ ॥

पूर्वा स्तोकीया अथैतमनुवाकं दिश्या । अथैतमनुवाकमुत्तरा स्तोकीया अथैतमनुवाकमेकविꣳशिनीं दीक्षामथैतमनुवाकमृतुदीक्षा अथैतमनुवाकमश्वस्य सावित्राण्यथैतमनुवाकं ।

---

१ छित्वा॰ M.

२ Thus M; ॰पुछ्नामभिनिरूहति Be; ॰पुछानामभिनिरूहनंति U; ॰पुछ्नामभिर्निरूहणंति B.

३ ॰थैनांत्समु॰ Be.

४ ॰ष्टौमैरंनान्य॰ M, but cp. supra p. 220, 6.

५ Thus MBU; दर्वीं Be.

६ Thus M; ॰शतिः Be; ॰शति BU.

त एवमेवैताननुवाकानेतेनैवानुवाकेन। यद्वैतेषामनुवाकानां पारं यन्त्यथैताननुवाकानुपसंक्रामन्ति वैश्वदेवानि चाश्वाङ्गानि च द्वावश्वरूपाणामोषधीनां च वनस्पतीनां च द्वावपाꣳ संधानानां चाभिधानानां च संप्लवस्यैक। उक्तः स्वारीहोमस्त एवमेवैताननुवाकानेतेनैवानुवाकेन। यद्वैतेषामनुवाकानां पारं यन्त्यथैताननुवाकानभिनिवर्तन्ते ॥ २० ॥

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेति। त एवमेवैताननुवाकानेतेनैवानुवाकेन पुनःपुनरभ्युपाकारं जुह्वत्यथ वसतीवरीणां परिहरणकाले ऽधिद्रवन्ति। परिहृतासु वसतीवरीष्वाहूतायाꣳ सुब्रह्मण्यायां पुनरेवाधिद्रवन्ति। त एवमेवैताननुवाकानेतेनैवानुवाकेन पुनःपुनरभ्युपाकारं जुह्वतः समाप्नुवन्ति। तानि वा एतान्यश्वस्य सर्वायुषाणीत्याचक्षते। ॥ २१ ॥

समाप्तय इति हैक आहुरेतैर्हि सर्वाꣳ रात्रिं जुह्वत्यथ प्रातरनुवाकमुपाकरिष्यन्ताववद्रवतो ऽध्वर्युश्च प्रतिप्रस्थाता च द्वावन्यावधिद्रवतो रात्रिकर्मिणावथ[1] राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति। परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यद्भिरुदैत्युक्थ्यं[2] क्रतुमुपैति। समानं कर्मोपाꣳश्वोरुपाꣳशुꣳ होष्यन्निन्द्राणसमधिद्रुत्य चतस्रः स्रुवाहुतीर्जुहोत्युषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहेति। प्रसिद्धो ऽभिषवः। समानं

---

१ ०कर्मिणामथ M.

२ उदैति M; उदेति the other MSS.

कर्मान्तर्यामादन्तर्यामꣳ होष्यन्निन्द्राणसमधिद्रुत्य चतस्रः स्रुवाहुतीर्जुहोत्युदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहेत्यथैतदुदित आदित्य उपरमन्ति रात्रिकर्मिणो । व्यवच्छिन्दन्ति परिश्रयणानि । निवर्तयन्तीन्द्राणसानि । प्रसिद्धꣳ सुवर्णग्रहैर्ग्रहा गृह्यन्ते । समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा सुवर्णरजताभ्यां द्वौ महिमानौ ग्रहौ गृह्णाति यः प्राणतो य आत्मदा इत्यथोक्थ्यं गृह्णाति । समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वा चतुर्विꣳशतिꣳ रशना आदाय यूपानभ्यायन्ति चतस्रस्तस्र इतरे परिकर्मिणः । स्वर्वन्तꣳ राज्जुदालमग्निष्ठमुत्सृज्य तस्माद्दक्षिणमेव पूर्वं पौतुद्रवमुपस्थावानमुच्छ्रयति ॥ २२ ॥

अथोत्तरं । त्रीन्दक्षिणतो बैल्वाꣳस्त्रीनुत्तरतस्त्रीन्दक्षिणतः खादिराꣳस्त्रीनुत्तरतस्त्रीन्दक्षिणतः पालाशाꣳस्त्रीनुत्तरतो । ऽथैतं पालाशमुपशयं दक्षिणतो न्यस्यति तूष्णीꣳ । स्वर्वन्तान्यूपानुत्सृज्याथाध्वर्युरग्निष्ठ उपाकरोत्यश्वं तूपरं गोमृगमित्येताꣳस्त्रीन्प्राजापत्यानथ पर्यङ्ग्यानुपाकरोत्याग्नेन्द्रं[1] कृष्णललाममैन्द्रापौष्णं पौष्णमाग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरꣳ सौर्यं बलक्षं पेत्वमित्यथाध्वर्युरग्निष्ठ एवोपाकरोत्यग्नये ऽनीकवते रोहिताञ्जिरनड्वा-

---

१ ०त्याग्नेन्द्रं M (sec. m.) ; ०त्याग्नेयं M (pr. m.) and all the other MSS., but cp. infra xv. 26 med. (229, 16).

नित्यैकादशांयाध्वर्युरग्निष्ठ एवोपाकरोति सोमाय स्वराज्ञे ऽनोवाहावनड्वाहाविति द्विनो[१] । ऽथाध्वर्युरग्निष्ठ एवोपाकरोतीन्द्राय राज्ञे सूकर इत्यैकादशारण्यान्सैषाग्निष्ठे पशुषष्टिर्भवत्यथ रोहितो धूम्ररोहित इति दशाष्टादशिनो ऽनुवाकास्तेषां पूर्वा एव नवतो दक्षिणेषु यूपेषूपस्थापयन्त्युत्तरा नवत उत्तरेष्वाग्नेन्द्रा दक्षिणेषां मुख्या भवन्त्यैन्द्रासूरा उत्तरेषामथ मयुः प्राजापत्य इति दश दशिनो ऽनुवाकास्तेषां पूर्वा एव पञ्चतो दक्षिणेषु यूपेषूपस्थापयन्त्युत्तराः पञ्चत उत्तरेषु । सोमापौष्णा दक्षिणेषां मुख्या भवन्त्यैन्द्रापौष्णा उत्तरेषामथैतस्मिन्नुपाकरणे मनसैव यं द्वेष्टि तमुपाकरोति । यद्यु वै न द्वेष्यात्तुस्ते पशुरित्यनुदिशत्यथैतस्मिन्काल आहवनीये स्रुवाहुतिं जुहोत्युपाकृताय स्वाहेति । ॥ २३ ॥ षष्ठः ॥

अथैतमश्वमयेण यूपान्स्वरथे युनक्ति युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुष इत्यथास्य पृष्ठं मर्मृज्यते रोचन्ते रोचना दिवीत्येवमेवोत्तरं योग्यं युनक्ति । तस्यैवमेवोत्तरतः[२] प्रष्टिमुपनियुनक्ति । तयोः पृष्ठं मर्मृज्यते युञ्जन्त्यस्य काम्या हरी

१ चतुर्विंशतिं पशून् i.s.o. द्विनः M. But TS. v. 6. 21 are enumerated only 22 paśus. The reading of M, however, would agree with the statement made infra (l. 3), that there are 60 paśus (3+11+11+24 ( 22 acc. to the Saṃhitā ! )+11). Should the text of TS. l.c. be incomplete ?

२ °वोत्तरं M but cp. supra xi. 6 (p. 73, 3) ; this passage is left out in all the other MSS.

विपक्षसा रथे। शोणा धृष्णू नृवाहसेत्यथ केतुं कृण्वन्नकेतव इति ध्वजं प्रतिमुञ्चत्यथ यजमानं वर्मसंनहनीयाभिः संनह्यति जीमूतस्येव भवति प्रतीकमिति चतुर्दशभिर्यथारूपमथ रथमुपतिष्ठते वनस्पते वीड्वङ्गो हि भूया इति तिसृभिरनुच्छन्दसमथ दुन्दुभिमुपश्वासयत्युपश्वासय पृथिवीमुत द्यामिति तिसृभिरनुच्छन्दसमथ दक्षिणं ह्रदमभिप्रयाति द्यौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैरा क्रोडेभ्यो ऽश्वानभिधावयन्त्यथैतं[1] रथं प्रदक्षिणमावर्त्य शाखामानयति यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम्। एतं स्तोतरेतेन पथा पुनरश्वमावर्तयासि न इति तानध्वर्युरुत्तराभि स्तोकीयाभिरन्वैत्यग्नये स्वाहा सोमाय स्वाहेत्येतेनानुवाकेन पुनःपुनरभ्युपाकारं यावदेषां स्तोका उपरमन्त्यथैतमश्वमग्रेण यूपान् स्वरयात्प्रमुच्य सौवर्णेन संदानेन संदित्वाध्वर्योरावसथं द्वियोगं वर्तयन्त्यथ महिषी वावाता परिवृक्तीत्येता अस्मै [2]गन्धान्गणान्मणींश्चादायाभ्यायन्त्यश्वं तस्य यत्प्राक् क्रोडात्तन्महिष्यभ्यनक्ति वसवस्त्वाञ्जन्तु गायत्रेण छन्दसेति पौतुद्रवेण प्रतिहितानां जायाभिः सहाथ यत्प्रतीचीनं क्रोडादा नाभेस्तद्वावाताभ्यनक्ति रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसेति ॥ २४ ॥

गौग्गुलवेनाराज्ञां जायाभिः सहाथ यत्प्रतीचीनं नाभेरा

---

१ °भिधापयंत्य° M (as supra xv. 5 and 6, p. 209. 7, 210. 12); °भितापयंत्य° the other MSS.

२ Thus M; गंधान्वगणान्मणी° Be; गंधाव्गणामणी° BU.

पुच्छात्तत्परिवृक्त्यभ्यनक्त्यादित्यास्त्वाञ्जन्तु जागतेन छन्दसेति मौस्तेन[1] सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह । तस्य ये प्राचीनं वहसः केशास्तेषु महिषी सहस्रꣳ सौवर्णान्काचानावयति भूरिति प्रतिहितानां जायाभिः सहाथ ये प्रतीचीनं वहसः केशास्तेषु वावाता सहस्रꣳ राजतान्काचानावयति भुव इत्यराज्ञां जायाभिः सहाथैषा परिवृक्ती वालेषु सहस्रꣳ सामुद्रान्काचानावयति सुवरिति सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह । यथेतं पत्नयो[2] यन्त्यथ महिषी वावाता परिवृक्ती माहानसी[3] दासीत्येता[4] अस्मै मधुमिश्राँल्लाजानुपकिरन्ति ॥ २५ ॥

लाजी३ञ्छाची३न्यशो[5] ममां३[5] यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापत इति । यस्यै ह्यन्नमत्ति तस्यै हार्धुका प्रजा[6] भवतीति[6] विज्ञायते । ऽथैतमश्वꣳ संदानात्प्रमुच्य निर्मन्थ्यस्यावृता निर्मन्थ्येन प्रचरति प्रहुत्याभिहुत्याथाध्वर्युरग्निष्ठे नियुनक्त्यश्वं तूपरं गोमृगमित्यथास्य पर्यङ्ग्यान्नियुनक्त्याग्नेन्द्रं कृष्णललाममैन्द्रापौष्णं पौष्णमित्येताꣳस्त्रीँल्ललाट ।

---

१ Thus M; मौस्ते the other MSS.; cp. Āp. xx. 15. 12 (मौसलकृतेन) ।

२ Thus all (not पत्न्यो) ।

३ Thus M; महानसी BU; महानसि Be.

४ Thus M; दोसी॰ the other MSS.

५ Pluti sign not in MSS.

६ M om. प्रजा and reads भवंतीति ।

आग्नेयौ कृष्णग्रीवौ ग्रीवासु । त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे । धात्रे पृषोदरमुदरे । सौर्यं बलक्षं पेत्वं पुच्छ इत्यथाध्वर्युरग्निष्ठ एव नियुनक्त्यग्नये ऽनीकवते रोहिताञ्जिरनड्वानित्यथाध्वर्युरग्निष्ठ एव नियुनक्ति सोमाय स्वराज्ञे ऽनोवाह्यावनड्वाहावित्यथाध्वर्युरग्निष्ठ एव नियुनक्तीन्द्राय राज्ञे सूकर इति । सर्वानेवारण्यान्नियोजनेनैवानुवर्तयते[1] याꣳश्च ग्राम्याणां पशूनामुत्सृज्यन्भवत्यारण्याꣳश्चाथ दक्षिणान्प्रतिप्रस्थातारो नियुञ्जन्त्यथोत्तरानथैतमश्वं नित्येन प्रोक्षेण प्रोक्ष्यातिप्रोक्षेण प्रोक्षति जज्ञि बीजमिति । नित्येनैवेतरान्पशूनथ दक्षिणान्प्रतिप्रस्थातारः प्रोक्षन्त्यथोत्तरानथैतमश्वमग्रेण यूपान्प्रोक्षणीरवघ्रापयति ॥ २६ ॥

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोकस्तं जेष्यस्यथावजिघ्र । वायुः पशुरासीदादित्यः पशुरासीदिति । यदि नावजिघ्रति पुनरेवावघ्रापयत्यग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः [2]स ते लोकस्तस्मात्त्वान्तरेष्यामि यदि नावजिघ्रसि । वायुः पशुरासीदादित्यः पशुरासीदिति । यदि नावजिघ्रति पुनरेवावघ्रापयत्यग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः[2] स ते लोकस्तं जेष्यसि यद्यवजिघ्रसि । वायुः पशुरासीदादित्यः

---

१ Thus M; ॰वर्तयति the other MSS.

२ ... २ This passage is found in M only.

पशुरसीदितीश्वरो ऽवघ्रातोरित्येतस्मिन्काल[1] आहवनीये स्रुवाहुतिं जुहोत्यावध्याय स्वाहेति । ॥ २७ ॥ सप्तमः ॥

अथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं । परि समिधꣳ शिनष्टि । वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति । संमृष्टे स्रुग्भ्यामुत्तरमथासꣳस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वाश्वं[2] तूपरं गोमृगमित्येतान्समनक्त्यथ पर्यङ्ग्यानथेतरानथ दक्षिणानथोत्तरानथ यथायतनꣳ स्रुचौ सादयित्वा प्रवरं प्रवृणीते । प्रसिद्धमृत्विजो वृणीते । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिद्भ्यः प्रेष्येति । समिद्धो अञ्जन्कृदरं मतीनामित्येता अश्वस्याप्रियो भवन्ति । वषट्कृते जुहोति प्रेष्य प्रेष्येति चतुर्थाष्टमयोः समानयमानो ऽष्टमे सर्वꣳ समानयते । परि स्वाहाकृतीभ्यः सꣳस्रावꣳ शिनष्टि । दश प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सुवर्णं च सायकं च याचति । तौ जुह्वामक्त्वा ताभ्यामश्वं तूपरं गोमृगमित्येतान्समनक्ति । कालायसैः पर्यङ्ग्याल्लोहायसैरितरान्सुवर्णैर्दक्षिणान्रजतैरुत्तरानथ यथायतनꣳ स्रुचौ सादयित्वाह पर्यग्नये क्रियमाणायानुब्रूहीति । नित्ये पर्यग्निकरणे ऽनुवर्तयति मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः शल्मलिरिति । पर्यग्निकृतानामेतेषां पशूनामुत्सृजन्त्यवी[3] द्वे धेनू

---

१ Thus (वघ्रातो॰) M. only ; वघ्राणे॰ or वप्राणे॰ the other MSS.

२ जुह्वा om. M.

३ Thus M ; ॰सृजंत्यपि the other MSS.

भौमी दिग्भ्यो वडबे द्वे धेनू भौमी वैराजी पुरुषी द्वे[1] धेनू भौमी इन्द्राय राज्ञे सूकर इति सर्वानेवाचारण्यानय[2] पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्तेˈ तेषामैन्द्रासूरा उत्तरार्ध्या भवन्त्यश्व उपचारतोˈ ऽश्वमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभतेˈ पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्तोˈ ऽथ याचति बर्हिश्च शतपलं च कृत्तिं चाधीवासं च कशिपु तार्प्यं चेत्युत्तरत एतद्वङ्गलꣳ संस्तीर्णं भवतिˈ तदश्वाय निहन्यमानायोपास्यति बर्हिश्च शतपलं च कृत्तिं चाधीवासं च कशिपु चेत्येतत्पञ्चतयंˈ तार्प्येण संज्ञप्यमानं यामेन साम्ना प्रस्तोतानूपतिष्ठतेˈ पृथगितरेभ्यस्तेत इतराग्प्राचो वोदीचो वा निघ्नन्त्यंकणवतो मायून्संज्ञपयतेत्युक्तैतेनैव यथेतमेत्य पृषदाज्यावकाश आसतेˈ ऽथैतौ ब्रह्मोद्यं वदतो होता च ब्रह्मा चान्तरेण यूपं चाहवनीयं चˈ दक्षिणतो ब्रह्मा भवत्युत्तरतो होताˈ होता ब्रह्माणं पृच्छति ॥ २८ ॥

किꣳ स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद्बृहद्वयः । किꣳ स्विदासीत्पिशंगिला किꣳ स्विदासीत्पिलिप्पिलेतिˈ तमितरः प्रत्याह द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । रात्रिरासीत्पिशंगिलाविरासीत्पिलिप्पिलेतिˈ तमितरः पृच्छति कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किꣳ स्विद्धिमस्य भेषजं किꣳ स्विदावपनं महदितिˈ तमितरः प्रत्याह

१ द्वेद्वे M.

२ श्च om. M.

सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महदिति । तमितरः पृच्छति पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् । पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योमेति । तमितरः प्रत्याह वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् । सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योमेति । संज्ञप्तान्प्राहुर्जुहोति संज्ञप्ताहुतिं यत्पशवो मायूनकृषतेत्यथ सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहेति । षट्त्रिंशतमश्वस्तोमीयाञ्जुहोति[1] यदक्रन्दः प्रथमं जायमानो मा नो मित्रो वरुणो अर्यमा ये वाजिनं परिपश्यन्ति पक्वमुत स्मास्य इवतस्तुरण्यत इत्यथाभ्यायन्ति शमितार उपेतनेति । पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयते ऽदितिः पाशान्प्रमुमोक्तैतानिति । पृथगविशाखाभिरुपसंज्येमां दिशं निरस्यन्त्यरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानित्यथैताः पत्नयः सौवर्णैरुदकमण्डलुभिरुदायन्ति । ता अश्वस्यानुपृष्ठं प्राणानाप्याययन्त्यो[2] यन्त्यनुपूर्वमितरेषां[2] पशूनामथैषा महिषी प्राश्य केशान्वासः परिधाय सौवर्णेन विधवनेन विधुवाना त्रिरपसलैरश्वं पर्येत्यवन्ती स्थावन्तीस्त्वावन्तु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां निधीनां त्वा निधिपतिं हवा-

---

१ °स्तोमीयांजुहोति M. (cp. Āp. xx. 21. 11); °स्तोमीयंजु° (cp. T. Br. III. 9. 12. 1.) the other MSS.

२ Thus M; °प्याययंत्यनुपूर्व° the other MSS.

महे वसो ममेति ' त्रिः परीत्योत्तरतस्तिष्ठति प्रतिहितानां जायाभिः सहै'वं वावाताराज्ञां जायाभिः सहै'वं परिवृक्ती सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह ' यथेतं पत्नयो यन्त्य'थैतमश्वꣳ सर्वैरलङ्कारैरलङ्कृत्य परिश्रयन्ति ' तस्योदीचीं द्वारं कुर्वन्त्य'थैतां महिषीꣳ सर्वैरलङ्कारैरलङ्कृत्य[1] तां[1] निह्नुवानां[1] गर्हमाणामध्वर्युरुदानयत्यम्बे अम्बाल्यम्बिके न मा नयति कश्चन । ससस्त्यश्वक इति ' साश्वमुत्तरत उपसंविश्य शिरस्तो वास उपधत्ते[2] ' तावध्वर्युस्तार्प्येण[2] संप्रोर्णोति सुभगे काम्पीलवासिनि सुवर्गे लोके संप्रोर्णाथामित्य'थैषा महिष्युपस्थे शेफमाधत्त आहमजानि गर्भधमा त्वमजासि गर्भधम् । तौ सह चतुरः पदः संप्रसारयावहा इति ' तामध्वर्युरनुमन्त्रयते वृषा वाꣳ रेतोधा रेतो दधात्विति प्रतिपद्य य आसां कृष्णे लक्ष्मणि सर्दिगृदिं परावधीदित्यातो ' ऽथैषा पत्नी गर्हते ॥ २९ ॥

अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वक इति ' तां यजमानो ऽभिमेथत्यूर्ध्वामेनामुच्छ्रयतादिति ' सा तथैव गर्हते ' तां वावाताभिमेथति यद्धरिणी यवमत्तीति ' सा तथैव गर्हते ' तां परिवृक्त्यभिमेथतीयं यका शकुन्तिकेति ' सा तथैव गर्हते ' ताꣳ सर्वे गणा अभिमेथन्ते[3] माता च ते

---

१ Thus M; ॰लंकृतां निह्नवानां the other MSS.

२ Thus M; उपत्त एता अध्वर्यु॰ Be; उपतैता अध्वर्यु॰ B; उपैता अध्वर्यु॰ U.

३ Thus, ātmanepadam, all.

पिता च त इति । नात्र गर्हते । मह्नतमश्वमुपसंविश्योपोत्थाय वासः परिधायाद्भिर्मार्जयत आपो हि ष्ठा मयोभुव इति तिसृभिरनुच्छन्दसं दधिक्राव्णो अकारिषमिति चतुर्थीꣳ । सर्वं एव सुरभिमतीमृचं जपन्ति ये यज्ञे ऽपूतं[1] वदन्ति । नयन्ति पत्नीं । व्यवच्छिन्दन्ति परिश्रयणमंश्वस्यालङ्करणमध्वर्योरावसथꣳ हरन्त्यथैतस्मिञ्छल्मलिसर्चं आज्यपिष्टानि संयुत्य तैरनुलोममश्वं प्रलिम्पन्त्यथ[2] महिषी वावाता परिवृक्तीत्येता अस्मै गणान्सूचीस्त्वादायाभ्यायन्त्यश्वं । तस्य यत्प्राक् क्रोडात्तस्मिन्महिषी सौवर्णाभिः सूचीभिरसिपथान्कल्पयन्त्येति गायत्री त्रिष्टुब् द्विपदा या चतुष्पदेति द्वाभ्यां प्रतिहितानां जायाभिः सहाथ यत्प्रतीचीनं क्रोडादा नाभेस्तस्मिन्वावाता राजताभिरुत्तराभ्यां द्वाभ्यामराज्ञां जायाभिः सहाथ यत्प्रतीचीनं नाभेरा पुच्छात्तस्मिन्परिवृक्ती सीसाभिरुत्तराभ्यां द्वाभ्याꣳ सूतग्रामणीनां च क्षत्तसंग्रहीतृणां च जायाभिः सह । यथेतं पत्नयो यन्त्यध्वर्योरावसथꣳ सूचीर्हरन्त्यथ सुवर्णं च सायकं च याचति । ताभ्यामश्वस्य क्रोडमापिनष्टीत्यमश्वं[3] विशासतेति[3] । कस्त्वा छ्यति कस्त्वा विशास्तीत्येतत्षडृचं यजमानं वाचयति । यदैतस्य सूक्तस्य पारमेत्यथाध्वर्युरश्वस्य क्रोडात्पिशितमुत्पिनष्टी-

---

१ The avagraha added by me.

२ •लिंपंत्यथ MB; •लिपत्यथ Be U.

३ Thus M; क्रोडमापिनसित्यंमश्वलंपिरवानसेति Be; क्रोडमापिनविर्थमश्व (श्वं) लं पिखानसेति BU.

त्यमश्वं[1] विश्रसतेत्या३मिति[1] । नाश्वस्य वपा भवति । चन्द्रमिव मेदः परिवृत्तꣳ[2] साश्वस्य वपा । वपा[3] तूपरस्यैवं गोमृगस्य । कालायसैः पर्यङ्ग्याणां लोहितायसैरितरेषाꣳ सुवर्णैर्दक्षिणेषाꣳ रजतैरुत्तरेषाम् । ॥ ३० ॥

अश्वस्यैवाध्वर्युर्वपया प्रथमया प्रतिपद्यते । ऽनूचीरितरा आहरन्त्यश्वस्यैव वपायै प्रतितप्यमानायै बर्हिषो ऽग्रमुपास्यत्युपेतरा यच्छन्त्युत्तरतो ऽश्वस्य तूपरस्य गोमृगस्येति वपाः श्रपयन्ति दक्षिणत इतरेषां पशूनामश्वस्यैव वपाꣳ स्रुवाहुत्याभिजुहोत्युपेतरा यच्छन्त्यथ [4]स्वाहाकृतिप्रैषेण चरित्वा सꣳस्रावेण पृषदाज्यमभिघार्याश्वस्यैव वपामभिघारयत्युपेतरा यच्छन्त्यथ पुरस्तात्स्वाहाकृतिꣳ[4] स्रुवाहुतिꣳ हुत्वा सुवर्णेन महिमानं जुहोति तस्य ते द्यौर्महिमेत्यथोपस्तीर्य द्विः स्रुवेणाश्वस्यैव[5] वपाꣳ समवलुम्पन्नाह प्रजापतय इत्युपाꣳशु हयस्य छागस्योस्रस्य वपानां मेदसो ऽवदीयमानस्यानुब्रूहीत्युच्चैर्यावतीः[6] स्रुक्संभवत्यथेतराः पात्र्या वेडसूनेन वोपोद्यच्छन्ते । द्विरभि-

---

१ Thus (without, however, the pluti sign) M ; ०तमुद्दपिनह्य इत्यमश्वं विश्रासवे इत्वामिति Be, and thus also BU (but थं i.s.o. इत्य) ।

२ ०वत्तं MSS. exc. M.

३ वपां M.

४...४ left out in all the MSS. exc. M.

५ एव om. M.

६ वदीयमानानामनु० M, cp. supra xi. 5 (p. 70, 11).— यावती M, यावति the other MSS. cf. supra l.c.

धारयत्यथाक्रम्याश्राव्याह प्रजापतय इत्युपांशु हयस्य छागस्योस्रस्य वपा[1]मेदः प्रस्थितं प्रेष्येत्युक्ते वषट्कृते वपा[2] जुहोत्यथोपरिष्टाद्रजतेन महिमानं जुहोति तस्य ते पृथिवी महिमेत्यथ पर्यङ्ग्याणां वपाभिश्चरत्यथेतरेषामथ दक्षिणेषां प्रतिप्रस्थातारो वपाभिश्चरन्त्यथोत्तरेषां । यांश्च ग्राम्याणां पशूनामुदसाचीदारण्यांश्च स्रुवाहुत्यस्तेषां वपाभ्यः प्रतिजुहोत्युपांश्वेतेषां पशुजातानां वपाभिश्चरन्ति प्राजापत्यानां सावित्राणां सारस्वतानां पौष्णानां यामानां पितृदेवतानां द्यावापृथिव्यानां वायव्यानां सौर्याणां वैश्वकर्मणानामित्यथोपरिष्टात्स्वाहाकृतिं स्रुवाहुतिं हुत्वा वपाश्रपणीरनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते । ऽथ पशून्विशास्ति[3] शमितरित्याह माश्वस्य लोमापिकृतीर्मांश्वस्यास्थि[4] संशारीर्यथाङ्गमेनं[4] विकृत्य शामित्रे कुम्भ्यां समवशमयतादेवं तूपरमेवं गोमृगमथ दक्षिणमश्वशफं गोमृगकण्ठमिति शामित्रे निष्पचतादयस्मयेन कमण्डलुनाश्वतेजनीं श्रपयतादित्यथ सावित्रं हुत्वा प्रसर्पन्ति प्रातःसवनाय । तदृजुधा संतिष्ठते । ॥ ३१ ॥

अष्टमः ॥

---

१ वपा M ; वपां B Be U.

२ वपां MB ; वपा Be.

३ Thus M ; संशास्ति Be B ; समास्ति U.

४ Thus M ; लोमविकृतीमांस्यास्थि संशारायथा॰ B ; लोमाविकृतीमांस्यास्थि संशारायथा॰ U ; लोमाविकृंतती etc. (as U) Be.

अथ सावित्रꣳ हुत्वा प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्मा दाक्षिणेभ्यो । दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ् यज्ञः संक्रामत्विति । कामं दक्षिणानां[१] ददाति । वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदिति । प्रसिद्धो ऽभ्यभिषेको[२] । ऽहीनसंततिं करोत्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । ऽथ सावित्रꣳ हुत्वा प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णात्यथोक्थ्यं गृह्णाति । समानं कर्मा पवमानात्पवमानेन चरित्वाथैतान्पशूनालभत्यश्वं तूपरं गोमृगमित्यथ पर्यङ्ग्यानथेतरानथ दक्षिणानथोत्तरानुत्तरतो ऽश्वस्य तूपरस्य गोमृगस्येति हविरुपसादयन्ति दक्षिणत इतरेषां पशूनामथ वैतसे कटे ऽश्वस्य[३] हृदयं निधाय सुवर्णेन च सायकेन च तस्याग्रे ऽवद्यन्नाह ॥ ३२ ॥

मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीत्येकादशावदानान्यवद्यत्येवं तूपरस्यैवं गोमृगस्य । कालायसैः पर्यङ्ग्याणां लोहायसैरितरेषाꣳ सुवर्णैर्दक्षिणेषाꣳ रजतैरुत्तरेषां । नाश्वस्य[४] तूपरस्य गोमृगस्येति स्विष्टकृते ऽवद्यत्यवद्यन्तीतरेषां पशूनां ।

---

१ M ins. प्रति after कामं and leaves a blank for two akṣaras before दक्षि० ।

२ Thus M ; भिषवो the other MSS.

३ स्वꣳ M.

४ Thus M ; वाश्वस्य the other MSS.

नाश्वस्य[१] तूपरस्य गोमृगस्येतीडामवद्यत्यथवद्यन्तीतरेषां पशूनामथैतमश्वं[२] वैतसे कटे यथाङ्गं[३] चिनोति । पुरस्तात्प्रत्यञ्चं तूपरमायातयति । पश्चात्प्राचीनं गोमृगमथ जुह्वपभृतावाददान आह प्रजापतय इत्युपाꣳशु हयस्य छागस्योस्रस्य हविषोऽनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह प्रजापतय इत्युपाꣳशु हयस्य छागस्योस्रस्य हविः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते तान्सहैव कटेनाग्नावनुप्रहरति ॥ ३३ ॥

द्यौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैरथ पर्यङ्ग्याणाꣳ हविर्भिश्चरत्यथैतरेषामथ दक्षिणेषां प्रतिप्रस्थातारो हविर्भिश्चरन्त्यथोत्तरेषां । याꣳश्च ग्राम्याणां पशूनामुदस्राचीदारण्याꣳश्च स्वाकृत्यस्तेषाꣳ हविर्भ्यः प्रतिजुहोत्युपाꣳश्वेतेषां पशुजातानाꣳ हविर्भिश्चरन्तीत्युक्तमेतदथ पुरस्ताद्वनस्पतेः समान्यो दिग्भ्यः प्रतियजत्यथ वनस्पतिना चरत्यथ पुरस्तात्स्विष्टकृतो गोमृगकण्ठेन प्रथमामश्वतेजनीमुपजुहोत्यथ स्विष्टकृता चरत्यथैतस्मिन्काल आहवनीये स्वाकृतिं जुहोति कृताय स्वाहेति । ॥ ३४ ॥

अथैतं प्रसेकमग्नावायातयति दक्षिणतो वोदञ्चं पश्चाद्वा प्राञ्चं । तस्य स्रुगिव पूर्वार्धो[४] भवत्यथैवमेव मध्यं । चमस इव

---

१ Thus M Be ; नानाश्वस्य UB.

२ MSS. exc. M. ins. here पशूनां ।

३ Thus M ; यथाश्वं Be ; यथाश्वं BU.

४ पूर्वार्धे M ; पूर्वार्ध्यो the other MSS., but cp. supra x. 54 (p. 56, 9).

बुध्नस्तस्मिꣳश्चतुर[1] उपस्तृणान आहाप्रमत्तः संततमानय स्तेगान्निगदिष्यामीति। स यत्र धाराग्निं प्राप्नोति तत्प्रतिपद्यते स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरिति चतुर्दशानुवाकान्प्रयासाय स्वाहेति पञ्चदशमथ द्वे आहुती जुहोतीलुवर्दाय स्वाहा बलिवर्दाय स्वाहेति षट्त्रिꣳशतमश्वस्तोमीयाꣳस्तिस्रो[2] द्विपदा इमा नु कं भुवना सीषधेमापो हि ष्ठा मयोभुव इति चात्रैतं प्रत्येकमग्नावनुप्रहरत्यथैनꣳ सꣳस्रावेणाभिजुहोति। समानं कर्मानूयाजेभ्यो। ऽथ पुरस्तादुत्तमस्यानूयाजस्याश्वशफेनाश्वतेजनीमुपजुहोति[3]। समानं कर्म पत्नीसंयाजेभ्यो। ऽथ पुरस्तादुत्तमस्य पत्नीसंयाजस्यायस्मयेन कमण्डलुनाश्वतेजनीमुपजुहोत्यृजुधैकविꣳश उक्थ्यः संतिष्ठते पत्नीसंयाजान्तो। ऽथ वसतीवरीः परिहृत्य पयाꣳसि विशिष्योपवसन्ति। ॥ ३५ ॥ नवमः ॥

अथातो महारात्र एव बुध्यन्ते। प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति। परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यङ्गिरसदैत्यतिरात्रं[4] क्रतुमुपैति। प्रसिद्धो ऽभिषवः। प्रसिद्धं ग्रहा गृह्यन्ते। समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्यैति। स्वर्वन्तꣳ

१ बुध्नंतस्मि० all, but cp. l.c.

२ ०स्तोमियास्तिस्रो MSS.

३ यस्वस्य i.s.o. अश्व० (before तेजनीम्) all the MSS. exc. M.

४ Thus M; the other MSS. are more or less defective.

राज्जुदालमग्निष्ठमुत्सृज्यैकादश प्रातर्गव्यान्प्राजापत्यान्पशूनुपाकरोति । तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय । तदृजुधा संतिष्ठते । प्रसर्पन्ति माध्यंदिनाय सवनाय । प्रसिद्धो ऽभिषवः । प्रसिद्धं ग्रहा गृह्यन्ते । समानं कर्म दाक्षिणेभ्यो । दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ् यज्ञः संक्रामत्वित्यवभ्रष्टं दक्षिणानां ददाति । वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदित्युत्सन्नो ऽभ्यभिषेको । नाचाहीनसंततिं करोत्यृजुधा माध्यंदिनꣳ सवनꣳ संतिष्ठते । प्रसर्पन्ति तृतीयसवनाय । प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णात्यथोक्थ्यं गृह्णाति । समानं कर्म पवमानात्पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति । तेषाꣳ समानी मनोता समानी देवता समानः प्रत्यभिमर्शनः समानो वसाहोमः समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशः । समानं कर्म पत्नीसंयाजेभ्यः । पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याभूतीश्चानुभूतीश्च जुहोत्या मे गृहा भवन्त्वग्निना तपो ऽन्वभवदित्येताभ्यामनुवाकाभ्यामथ भूताभव्यौ होमौ जुहोति भूताय स्वाहा भविष्यते स्वाहेत्यथाध्वरिकाणि समिष्टयजूꣳषि हुत्वा दशाग्निकान्युपजुहोति । समानं कर्मावभृथादथैतस्मिन्नवभृथे द्वितीयामवभृथाहुतिꣳ हुत्वा दश वारुणान्युपजुहोति नमो राज्ञे नमो वरुणायेत्यथ मृत्यवे स्वाहा मृत्यवे स्वाहेति नवतिमाहुतीर्जुहोति प्रयासाय स्वाहायासाय स्वाहेत्येकादश । शतायुर्वै पुरुषः

शतवीर्यं आत्मैकशतो यावानेव पुरुषस्तस्मान्मृत्युमवयजत इति ब्राह्मणम् । ॥ ३६ ॥

अथैष आत्रेयो विहृतः शुक्लो विक्लिधस्तिलकवान्पिङ्गाक्षः[1] खलतिर्विकटः कुनखी कुब्जः शिपिविष्टो नग्न उपमज्जति[2] । तस्य मूर्ध्नि जुहोति जुम्बकाय स्वाहेत्यथास्मा एतच्छतं विपथं ददात्यथैनमिषुजितात्प्रधमन्ति[3] मा मे राष्ट्रे वात्सीरिति[3] । प्रसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै सौरीर्नव श्वेता वशा इत्युपालम्भ्या भवन्ति । तासां प्रसिद्धं वपाभिश्चरित्वाग्रेण गार्हपत्यं पात्नीवतमुच्छ्रित्य तस्मिञ्छगलं कल्माषं किकिदीविं विदीगयमिति त्वाष्ट्रान्पशूनुपाकरोति । तान्पर्यग्निकृतानुत्सृज्याज्येन संस्थां करोत्यथ पशुपुरोडाशान्निर्वपति पशुपुरोडाशौ वाथ पुरस्तात्पशुपुरोडाशस्विष्टकृतो दश यव्यान्युपजुहोति नमो राज्ञे नमो वरु-

---

१ तिलकावान्पिंगलाक्षः M.

२ Thus M; उपदिक्ष्यति the other MSS.

३ Wholly uncertain. ददात्यथैनमिषुजितान्प्रथमंति मा मे राष्ट्रे वात्सीरिति M; ददात्यैनामिचु(षि) तात्प्रथमंत्रिमासे राष्ट्रेष्वेवाव्यत्सीरिति B Be (pr. m.); ददात्येनामिषुच्चितान्प्रथमंत्रिमासे राष्ट्रेष्वेवाव्यवात्सीरिति Be (sec. m); ददात्यैनामिचुषितात्प्र॰ etc. (as B) U; this is certain, that प्रथमंति is a third person of a verb; I have conjectured प्रधमन्ति (cp. S'āṅkh. śrs. xvi. 18, 20: निःषेधन्ति); then the foregoing must be an ablative; but whether इषुजितात् is the correct reading I do not see.

णायेत्यथ पुरस्तात्पशुस्विष्टकृतो दश[१] गव्यान्युपजुहोति मयोभूर्वातो अभिवातूस्रा इति । प्रसिद्धं पशवः संतिष्ठन्ते । ऽथोदवसानीययेष्ट्येष्ट्वाग्रेणाहवनीयं विशालयूपमुच्छ्रित्य तस्मिन्नेतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमाश्विनमिति । तेषां प्रसिद्धं वपाभिश्चरित्वा पशुपुरोडाशान्निर्वपति । ताननुवर्तन्ते ऽष्टौ देवसुवाꣳ हवीꣳष्यग्नये ऽꣳहोमुचे ऽष्टाकपाल इत्येषा च दशहविरिष्टिसंस्था एता याज्यापुरोनुवाक्या भवन्ति ॥ ३७ ॥

अग्नेर्मन्वे प्रथमस्य प्रचेतस इत्यथ पुरस्तात्पशुपुरोडाशस्विष्टकृतो दश ब्रह्मवर्चसान्युपजुहोत्या ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्यथ पुरस्तात्पशुस्विष्टकृतो दश संततिहोमानुपजुहोत्यग्नये समनमत्पृथिव्यै समनमदिति । प्रसिद्धं पशवः संतिष्ठन्ते । ऽथैतैरन्वहं द्वादशभिर्ब्रह्मौदनैश्चरति । तेषामुक्तं चरणं यथामुत्रैकस्यान्यत्र[२] रशनाभ्यामन्त्रेभ्य एतान्परःशतं शतपलान्निष्कान्ददाति । सुवर्णरजते महिम्नोः पात्रे ददात्येकतयानि[३] सौवर्णानि पात्राणि ददाति हिरण्मयं कशिपु[४]

---

१ om. M.

२ Thus M (for चमुत्र cp. supra xv. 4); यथामुत्रैकसन्यत्र the other MSS.; as all the MSS. contain a case form of एक, I did not venture to change यथामुत्रैवमन्यत्र, *i.e.*, yathā amutra evam, a. r.

३ Thus M; °त्येनानि the other MSS.

४ °पु॰ or °पुं MU.

हिरण्मयं[1] पड्वीशꣳ[1] हिरण्मयꣳ संदानमित्यथ[2] वीणा-
गाथिभ्याꣳ शतं विपथौ ददात्यथर्तुपशुभिर्यजत[3] ऋतुपर्यायं
वा समानेषु वान्यायतनेषु पिशङ्गास्त्रयो वासन्ताः सारङ्गा-
स्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रयः शारदाः पृश्नि-
सक्थास्त्रयो हैमन्तिका अवलिप्तास्त्रयः शैशिराः संवत्सराय
निवक्षस इत्यथ देविकाहविर्भिर्यजतेऽथ त्रैधातवीयया
यजतेऽथ सौत्रामण्या यजते संतिष्ठतेऽश्वमेधस्त्रिभिः
संवत्सरैः संतिष्ठतेऽश्वमेधः संतिष्ठतेऽश्वमेधः ॥ ३८ ॥
दशमः ॥

॥ इति पञ्चदशः प्रश्नः ॥

---

१ Left out in the MSS. exc. M.

२ संदावमि॰ MSS. exc. M.

३ यजत M, यजंत the other MSS.

द्वादशाहेन यक्ष्यमाणो भवत्येको वा बहवो[1] वांतो[1] ह्येको[1] दक्षिणावता यजते । स[2] यद्येको[1] यदि बहवो ऽमावास्याया एव षडहेनोपरिष्टाद्दीक्षन्ते । ते[3] गृहपतेररण्योः संजानते पृथग्वा । ते यदि गृहपतेररण्योः संजानते मथित्वा गार्हपत्यमाहवनीयमुद्धरन्ति[4] । ग्रामाद्भृतश्रपणमाहरन्ति । यद्यु वै पृथक् संजानते गृहपतिरेव प्रथमो मन्थते[5] । तदेवेतरे[6] पर्युपविश्य मथित्वामथित्वैव गार्हपत्यꣳ संनिवपन्ति । तस्मादेकवद्भूतादाहवनीयमुद्धरन्ति । ग्रामाद्भृतश्रपणानाहृत्य संनिवपन्त्यथ यदि पश्चादपर[7] आगच्छति मथित्वैव गार्हपत्ये ऽधि निवपत्याहवनीये ऽधि ग्रामाद्भृतश्रपणमाहृत्याप्यर्जत्युपो[8] एनं[8] पूर्वेषु कर्मसु कुर्वन्ते । ऽथातः पवनस्यैव मीमाꣳसा । गृहपतिमेवाध्वर्युः प्रथमं पवयत्यथ होतारमथ ब्रह्माणमथोद्गातारं प्रतिप्रस्थाताध्वर्युं पवयति प्रस्तोतारं प्रशास्तारं ब्राह्मणाच्छꣳसिनमाग्नीध्रः प्रतिप्रस्थातारं पवयत्यच्छावाकं नेष्टारं पोतारꣳ

---

१ Thus M only (regarding उतो हि cp. infra xvi. 13 : 260, 5); बहवो वा यद्येको all the other MSS.

२ Given only by M.

३ Only in M.

४ Thus M only ; ०हरति all the other MSS.

५ मंथति M.

६ तद्देवे० all the MSS. exc. M.

७ पश्चेवापर M.

८ Thus M; ०माहृत्याप्यर्जत्यु० T Be 11 D; ०माहृत्यनिवपंत्यप्युत्सृजत्यु० B Be; ०माहृत्यनिवपत्ययैनं U.

सदस्यमुन्नेताग्नीध्रं पवयति ग्रावस्तुतꣳ सुब्रह्मण्यं प्रतिहर्तारमात्मानमन्ततस्ते चेद्ब्रूयुरध्वर्युर्वाव[१] सर्वस्य पवयिता स नः सर्वान्पवयत्विति स एवैनान्सर्वान्पवयत्यपि वान्योऽन्यं पवयन्ति[२] यद्यधीयन्तो भवन्ति । ॥ १ ॥

तेषां प्रसिद्धा दीक्षणीयेष्टिस्तायते । सकृदाश्राविते स यत्राह भरतवदिति तद्गृहपतेरेवार्षेयं प्रथमं वृणीते[३] ऽथ होतुरथात्मनो ऽथ ब्रह्मणो ऽथोद्गातुरथ प्रतिप्रस्थातुरथ प्रस्तोतुरथ प्रशास्तुरथ ब्राह्मणाच्छꣳसिनो ऽच्छावाकस्य सदस्यस्याग्नीध्रः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तुरन्ततो । ब्रह्मण्वदिति समानं । ते[४] सर्वे[४] एव[४] दीक्षाहुतिषु समन्वारभन्ते । गृहपतिमेवाध्वर्युरुच्चैः कृष्णाजिने वाचयति । तदेवेतरे[५] ऽनुनिक्रामन्त्यपि[६] वान्योऽन्यं वाचयन्ति यद्यधीयन्तो भवन्ति । ते यथोत्साहं व्रतदुघमुपयन्त्येकैकां[७] वा बह्वीर्वा । तेषां यथैव प्रवरानुपूर्व्यमेवं[८] घर्मोच्छिष्टे[९] ऽति-

१ Thus MTD Be 11 U (pr. m.) ; वा (i. s. o. वाव) B Be U (sec. m).

२ Thus M; sing. the other MSS.

३ प्रवृणीते M.

४ Thus M ; ते सर्वे (without एव) T Be 11 U D; समानमंततः सर्वे एव B Be.

५ Thus MUD ; तद्देवेतरे the other MSS.

६ Thus M ; नुनिष्क्राम° all the other MSS.

७ Thus (व्रतदुघमु°) Be 11 DUT ; °दुहमुप° B ; °दुघ उप° M.

८ एवं om. M.

९ Thus M B Be; °च्छिष्टेष्व° T Be 11 DU.

ग्राह्मभक्षेषु[१] षोडशिनि । षष्ठ्यामुपसद्युत्तरवेदिꣳ संनिवपन्ति यद्यनग्निचित्यो भवत्यथ यदि साग्निचित्यः प्रथमायामेवोपसद्युत्तरवेदिꣳ संनिवपन्ति । ॥ २ ॥

तेषां द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुता[२] । न द्वादशाहे ऽग्निं चिन्वीतेत्येक आहुश्चिन्वत उ हैके । प्रसिद्धेन कर्मणोपवसथाद्यन्ति । तेषां ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रस्तायते । स यत्र माध्यंदिने सवने तृतीयसवनाय वसतीवरीभ्यो ऽवनयति तद्वसतीवरीकलशे यावन्मात्रीरतिशिष्याग्नीध्रं[३] हृत्वा छायायै चातपतश्च सन्धौ गृह्णाति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माꣳ आविवासति हविष्माꣳ अस्तु सूर्य इत्येषाहीनसंततिरेतामेव पुनःपुनश्चोदयिष्याम[४] इति वदन्तः । सो ऽत्र वैव[५] यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञियस्य[६] वा स्तोत्रे शंयुवाके वा । तेषां ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रः संतिष्ठते । तस्मिन्सꣳ-

---

१ Thus M T Be 11 DU ; •भक्षे B Be.

२ प्रसुतः all the MSS. exc. M, cp. infra xvi. 12 init.

३ Thus ( यावन्मात्रीर• ) MT Be 11 ; •मात्रीम• D ; •मात्रम• B Be U.—All the MSS. exc. M : अवशिष्य ।

४ Thus M B Be ; •ष्यामह T Be 11 DU.

५ Thus M in accordance with the Dvaidha ; सोत्रैव T Be 11 U ; सोत्रवै B Be ; सौत्रैव D.

६ •यज्ञियस्य T Be 11 DU ; •यज्ञीयस्य MB Be.

स्थिते विवर्तयन्ति[१] परिधीननुप्रहरन्ति[१] प्रस्तरं । पत्नीसंयाजान्तो । ऽतिप्रैषेण ब्रह्मा वाचं यच्छति । परिहृतासु वसतीवरीष्वाहुतायाꣳ सुब्रह्मण्यायां ब्रह्मा वाचं विसृजते । प्रतिपद्यते[२] दिवा प्रातरनुवाकेनाह्ना संक्रामन्होता छन्दाꣳस्यन्वाह निमील्याध्वर्युरुपाꣳशुं जुहोति राज्ञै रूपमिति वदन्तस्तायते त्रिवृदग्निष्टोमो रथंतरसामा । माहेन्द्रस्य स्तोत्रे रथो युक्तो ऽत्याधावति[३] । रथशब्देन माहेन्द्रस्य स्तोत्रमुपाकरोत्यैतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायते पञ्चदश उक्थ्यो बृहत्सामा । दुन्दुभिनैतदहरध्वर्युर्माहेन्द्रस्य[४] स्तोत्रमुपाकरोत्यैतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायते सप्तदश उक्थ्यो वैरूपसामाधावेनैतदहरध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोत्यैतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायत एकविꣳश उक्थ्यो वैराजसामाग्नेयस्य[५] षोडशी[५] चातिग्राह्यावनतिग्राह्यः[५] षोडशीत्येक आहुरेकविꣳशमेतदहर्न्यूङ्ख्यं[६] भवति[६] । विराजां वा

---

१ Plural MT Be 11 DU and Dvaidha; singular B Be.

२ Plural M.

३ Thus M; धावति Keś.; यावति Be TD; भवति B Be.

४ Thus M; दुंदुभिशब्देनैतद॰ the other MSS.

५ Thus M only; ॰ग्नेयस्य षोडशी च नातिग्राह्यः Be; ॰ग्नेयस्य षोडशिनातिग्राह्यः B; ॰ग्नेयं च षोडशिनौ चातिग्राह्याश्च नातिग्राह्यः Be 11 T (the latter only षोडशीनि) UD.

६ Thus M; न्यूंखयंति all the other MSS.

प्रतिपत्सु न्यूङ्खयन्ति शस्त्रे[1] वेत्येतदेकमथापरं[2] प्रातरनुवाके न्यूङ्खयन्ति हविष्कृत्युभयेषु प्रस्थितेषु माहेन्द्रस्याश्रावणे । न तत ऊर्ध्वं न्यूङ्खयन्तीत्यरणीहस्त[3] एतदहरध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोति । तदुद्गातुर्दक्षिण[4] ऊरौ मन्थति[5] । तं जातꣳ सर्व एवाभिहिङ्कुर्वन्ति । ॥ ३ ॥

तस्य मीमाꣳसा । गार्हपत्ये ऽनुप्रहरेत्प्रतिष्ठाकामानामाग्नीध्रे[6] प्रजाकामानाꣳ[7] । शामित्रे पशुकामानामाहवनीये स्वर्गकामानामित्यनाहृत्य तदाहवनीय[8] एवानुप्रहरति भवतं नः समनसाविति । प्रहृत्याभिजुहोत्यग्नावग्निश्चरति प्रविष्ट इत्येतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायते त्रिणव उक्थ्यः शाक्वरसामैन्द्रो ऽतिग्राह्यो । ऽद्भिरेतदहरवकामिश्राभिरध्वर्युर्माहेन्द्रस्य[9] स्तोत्रमुपाकरोति । तासां

---

१ शस्त्रेशस्त्रे Be B.

२ न ins. TD Be 11 U.

३ Thus MT Be 11 UD; ॰रणीभ्यामे॰ B Be.

४ तमुद्गा॰ M.

५ मंथंति M.

६ ॰ग्नीध्रीये B Be U.

७ प्रजननका॰ M.

८ Thus M only; तंतमाह॰ T Be 11 DU (pr. m.); तमाह॰ U (sec. m.); एतमाह॰ B Be.

९ All MSS. ins. एव after अद्भिर्, exc. M.

मीमाꣳसा । चात्वाले ऽवनयेदास्तावे निनयेत्प्रोक्षणीः[1] कुर्वीत[2] पुरोडाशीयानि पिष्टानि संयौयादित्यनादृत्य[3] तदुद्गातृष्वधीना एवैनाः कुर्यादुद्गातारो[4] ह्येताभिररण्येगेयानाꣳ साम्नाꣳ शुचꣳ शमयन्तो मन्यन्ते । ता उ चेदध्वर्यवे प्रब्रूयुरपो ऽभ्यवहरतेत्येव ब्रूयादित्येतावदेवैतदहः शिल्पं क्रियते । ऽहीनसंततिं करोत्यथ श्वो भूते तायते त्रयस्त्रिꣳश उक्थ्यो रैवतसामा सौर्या ऽतिग्राह्यो । ऽद्भिरेवैतदहर्दूर्वामिश्राभिरध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोति । ॥ ४ ॥

तासामुक्ता मीमाꣳसा । स्वयमृतुयाजमेवैतदहर्भवति । नैतदहरन्योऽन्यस्यर्तुयाजं यजन्ति[5] । स यत्राहाध्वर्यू यजतमिति तदध्वर्यू जघनेन हविर्धाने उपविश्य स्वयमृतुयाजं यजतो ये३[6] यजामहे ऽश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबतामर्वाञ्चमद्य यय्यं नृवाहणं रथं युञ्जाथामिह वां विमोचनम् । पृङ्क्तं हवीꣳषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू ऋतुना सोमं पिबतां वौ३षदिति । स यत्राह गृहपते यजेति तद्गृहपतिर्जघनेन गार्हपत्यमुपविश्य स्वयमृतुयाजं यजति

---

१ वनयेत्प्रो॰ M Be B.

२ Thus M; कुर्वते the other MSS.

३ संयौयादि॰ MDU T Be 11; संयूयादि॰ B Be.

४ All MSS. exc. M ins. तद् after कुर्यात्।

५ Plural only M.

६ Sign of pluti only in D Be B.

येऽ३[1] यजामहे ऽग्निं गृहपतिं गार्हपत्यात्सुगृहपतयस्त्वयाग्न इमे सुन्वन्तो यजमानाः स्युः सुगृहपतिस्त्वमेभिः सुन्वद्भिर्यजमानैः स्या[2] अग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतु जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिम् । विश्वेभिर्विश्वाꣳ ऋतुना वसो मह उशन्देवाꣳ उशतः पायया हविर्ऋतुना सोमं पिबतु वौ३षदिति । [3]सांवाग्निनमेतदहर्भवत्युत्तरतो वत्सान्धारयन्ति दक्षिणतो मातॄर्माहेन्द्रस्य स्तोत्रे ऽन्तरेण[4] सदोहविर्धाने संवाश्य[5] वत्सान्मातृभिः सꣳसृजन्ति[6] । बध्नन्ति वत्सानुत्सृजन्ति मातॄर्माहेन्द्रस्य[7] स्तोत्रमुपाकरोत्यथापराह्णे[7] उक्थ्यपर्यायेषु शिल्पानि क्रियन्ते । पारुच्छेपीर्होता शꣳसति । वालखिल्या मैत्रावरुणो विहरति । वृषाकपिं ब्राह्मणाच्छꣳसी शꣳसत्येवयामरुतमच्छावाकः । संतिष्ठते पृष्ठ्यः

---

१ Sign of pluti only in B Be UD.

२ स्याद् all.

३ The passage सांवाग्नि॰ up to उपाकरोति ( line 9 ) is given here by MB Be (sec. m) only ; the other MSS. give it in kh. 6 after the words बृहत्सामानम् ( 252, 3 ). U agrees with M with this exception that only the first words सांवाग्निनमेतदहर्भवति are given after बृहत्सामानम् ।—सांकाग्निन॰ all.

४ Thus MB Be ; स्तोत्रे ऽन्तरेण the other MSS.

५ Thus M only ; संविश्य all the other MSS.

६ समवसृ॰ M.

७ माहेन्द्रस्यस्तो॰ उपाकरोति not found in M.

षडहो ऽहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयाꣳसि विषिच्योपवसन्ति ॥ ५ ॥ प्रथमः ॥

अथ श्वो भूते चतुर्विꣳशं छन्दोममुपयन्ति बृहत्सामानमथ श्वो भूते चतुश्चत्वारिꣳशं छन्दोममुपयन्ति रथंतरसामानमथ श्वो भूते ऽष्टाचत्वारिꣳशं छन्दोममुपयन्ति बृहत्सामानमथ श्वो भूते चतुर्विꣳशमग्निष्टोममुपयन्ति रथंतरसामानमविवाक्यमेतदहर्भवति नैतदहरन्योऽन्यस्मा उपहताय व्याङ्गर्गाथया[1] वा नाराशꣳस्या वा विब्रूयादिति तद्‌ वा आहुर्न वै यज्ञः संतिष्ठते यत्र विब्रूयादिति विब्रूयादिति[2] वै[2] नो[2] ब्राह्मणं भवति नैतदाद्रियेत[3] नाद्रियेतेति[3] स्थितिरननुष्टुभमेतदहर्भवति नानुष्टुभो ऽधीयते[4] ते चेदनुष्टुभ उद्धरेरन्नध्वर्युरनुष्टुभ[5] उद्धरेदमूर्या उप सूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वन्त्वध्वरमित्येतया सौर्या[6] गायत्र्या वसती-

---

१ Thus T Be 11 DU; व्याङ्गर्गाथाया B Be; व्याङ्गरथवाया M, but above थ and व two akṣaras are written, which I am unable to decipher.

२ Thus M; the other MSS. विब्रूयादिति once only and चैवैनो।

३ Thus M; most of the other MSS. om. here and at the collateral passages (xvi. 6 s. fin., xvi. 16 s. fin.) नाद्रियेत।

४ धीयंते all the MSS. exc. M.

५ Thus Be, and M, which inserts only चेद् after अध्वर्युः।—अनुष्टुभसु० both times B; the whole passage runs thus in T Be 11: तंचेन्ननुचनुभभ उद्धरेद्वेनुष्टुभ उद्धरेदमूर्या; in U; ह्रचंननुवननुष्टुभ उद्धरेद्वे अनुष्टुभ उद्ध रेदमूर्या; in D: तंचेननुचननुष्टुभमुद्धरेद्वेनुष्टुभ उद्धरेदमूर्या।

६ Thus M only; सौर्यर्चा all the other MSS.

वरीर्गृह्णीयादुद्दे त्वा मनसे त्वेत्यपोद्धृत्यैतामन्यया सौम्या[१] गायत्र्या राजानमुपावहरेद्विष्णो त्वं नो अन्तम इत्यपोद्धृत्यैतामन्यया वैष्णव्या गायत्र्या राजानमुपतिष्ठेत । स उ चेद्विद्वाननुष्टुभमभिव्याहरत्यत्यक्रमिषमिति[२] होत्रे प्राह । होतानाप्तस्यापयिता । होतास्य तदक्षरैरपिवयति[३] । स उ चेन्मन्येतामितकामो[४] वा अहमस्मि यदृङ्मयं वेदे यजुर्मयमेव[५] तद्यावेवाक्षयौ[५] वेदौ तौ[५] संपादयेतामिति[५] नैतदाद्रियेत । नाद्रियेतेति स्थितिः । संतिष्ठत एष चतुर्विंꣳशो ऽग्निष्टोमो रथंतरसामा । ॥ ६ ॥

तस्मिन्संꣳस्थिते समिद्धारा[६] यन्त्याहृत्य[६] समिध आग्नी-

---

१ Thus M only; सौर्या B Be; सौर्यया Be 11 TUD.

२ The text is corrupt in all the MSS., and I am at a loss how to emend; अत्यक्रमिषम् is my conjecture; अक्षमिषमिति B; अमिषमिति Be; अवयामिषमिति TDU; अवयामिषति Be 11; अभ्रमन्या (or न्मा) मुजोषमिति M. Probably we are to read an iṣ-aorist 1 ps. sing. act. Keś. has: सत्याम्रिषमिति नोच्चैर्जेतास्मि नाभ्रिता (*sic*).

३ Thus conjecturally. All the MSS. ॰वपति exc. M, which has ॰पवयति ।

४ ॰कामा MT Be 11 DU; ॰कामः B Be, which om. वा; all the MSS. exc. M begin a new kh. with अहमस्मि ।

५ Thus M; यजुर्मयं वैतान्यावावेवाक्षराश्रयौ वेदौ ततौ संपा॰ T Be 11 D; यजुर्मयं वैतान्यक्षराश्रयौ वेदौ संपा॰ B Be; यजुर्मयं वैतान्यावेवाक्षराश्रयौ वेदौ संपा॰ U.

६ Thus corrected; समिद्धारयंत्या॰ MSS.

ग्नीये संन्यस्यन्ति[१] । तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं[२] जुहोति प्रजापतये स्वाहेति मनसाथ सदः प्रसर्पन्ति तूष्णीꣳ-स्तोमाय । संप्रसृप्तान्विदित्वाध्वर्युर्मनसैव प्राङ् द्रुत्वा मनसेमां[३] पात्रं कृत्वा मनसान्यं[४] ग्रहं प्रजापतये गृह्णात्युपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामीति[५] । यदिदं किं च तदिति मनसा परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा मनसैव स्तोत्रमुपाकरोति । मनसा[६] प्रसौति[६] । मनसा प्रस्तौति । मनसोद्गायति । मनसा प्रतिहरति । मनसा होत्र एषोत्तमेति प्राङ्मनसा होताह्वयते । मनसाध्वर्युः प्रत्याह्वयते । मनसा शꣳसति । मनसा प्रतिगृणाति । यदैतस्य[७] मानसस्य शस्त्रस्य पारमेत्यथ होतोच्चैश्चतुर्होतृन्व्याचष्टे । तस्मा[८] अध्वर्युः प्रतिगृणाति ॥ ७ ॥

ओꣳ होतस्तथा होतः सत्यꣳ[९] होतररात्स्म होतरिति ।

---

१ सं॰ found in M only.

२ स्रुवाहुतीर् T Be 11 UD.

३ Thus M; मनसैव the other MSS.

४ All the MSS. exc. M. om. अन्यं ।

५ इति om. M.

६ om. B Be U.

७ यदेतस्य B Be.

८ तस्माद् T Be 11 UD.

९ Be 11 TD ins. इ, not M Be BU, cp. xii. 16 (109, 14).

यद्यु वै होता नाध्येत्यन्य[1] उ[2] होताग्रꣳसौ ग्रꣳसति । तस्मा उ प्रतिप्रस्थाता प्रतिगृणाति । यदेतेषां पारं यन्त्यथाध्वर्युर्मनसैव प्राङ् द्रुत्वा मनसैव तं ग्रहमुपोद्यच्छते[1] । मनसाश्रावयति । मनसा प्रत्याश्रावयति । मनसा वषट्कृतानुवषट्कृते हुत्वा हरति भक्षं । मनसा समुपहूय भक्षयन्ति । मनसा निर्णिज्य पात्रं प्रयच्छति । संतिष्ठत एष तूष्णीꣳस्तोमो । ऽथर्त्विजो विपृच्छत्यधिवृक्षसूर्ये[3] वाचं विसृज्यध्वाऽ३इ[4] नक्षत्रेषूऽ३[4] इत्यधिवृक्षसूर्य[4] इति वै नो ब्राह्मणं भवति । ते ऽधिवृक्षसूर्य एव वाचं विसृजन्ते । तानत्रैवासीनान्परिश्रयन्ति । पत्नीशाले पत्नीः परिश्रयन्त्यथानतिसर्पन्तावध्वर्यू धिष्ण्यान्बर्हिर्भ्यामौदुम्बरीꣳ समन्वारभेते इह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिति[5] । ते यथासमुदितं[6] वाचं विसृजन्ते । ॥ ८ ॥

अथातः सर्पणस्यैव मीमाꣳसा । दक्षिणस्य हविर्धानस्याधो-

---

१ Thus MT B 11; ०न्यतु D; ०न्यो B Be.

२ Most of the MSS. have the plural.

३ विश्वक्त्य० all exc. M.

४ Thus emended hesitatingly; विसृज्यध्वाम्नक्षत्रेषू—त्यधि० M; विसृज्यध्वासंनक्षत्रेषू इत्यधि० T Be 11 D; विसृज्यध्वासंनक्षत्रेष्वित्यधि० U; विसृज्यध्वमिति वासंनक्षत्रेष्विति वा अधि० B Be; Keś.: समाप्ते तूष्णीꣳस्तोमे ऽध्वर्युः ऋत्विजो विपृच्छति अधिवृक्षसूर्ये वाचं विसृज्यध्वमा (*sic*) नक्षत्रेष्विति। इतर ऋत्विजः प्रतिब्रूयुः अधिवृक्षसूर्ये वाचं विसृज्यामह (*sic*) इति वा। उदितेषु नक्षत्रेषु विसृज्यामह (*sic*) इति वा।

५ Thus M B Be and cp. Āp. XXI. 12. 7; रमतामिति T Be 11 DU.

६ ०दितां M.

ऽधो ऽत्त्वं सर्पेयुरेतेन ह वै सर्पाः सस्रपुस्ततो वै ते जीर्णास्तनूरपाघ्नतेति। तद्‌ वा आहुर्यो वा अपथेन प्रतिपद्यते स्थाणुं वा हन्ति गर्त[1] वा पतति भ्रेषं स न्येति। वषट्कारपथेनैव सर्पेयुरेष वाव[2] स्वर्ग्यः[2] पन्था यद्वषट्कारपथ इति। तद्‌ वा आहुः पराङिव वा एषो ऽशान्तः पन्था यद्वषट्कारपन्थो। ऽध्वर्युपथेनैव सर्पेयुरेष वा[3] अर्वाचः[3] पराचः[3] स्वर्ग्यः पन्था यदध्वर्युपथ इति। ते ऽध्वर्युपथेनैव सर्पन्ति। तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोत्युपसृजन्धात्रे वत्सं धारयन्धरुणो धयन्। रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति। समुत्क्रम्य चात्वालदेशे जपन्ति वागैतु वागुपैतु वाङ्मोपैतु वाग्यदकर्म यन्नाकर्म यदत्यगाम यन्नात्यगाम यदत्यरीरिचाम यन्नात्यरीरिचाम प्रजापतौ[4] प्रजापतिं[4] तत्पितरमप्येत्विति[4]। तद्वाच्यन्ततः[5] प्रतितिष्ठन्ति। तेषां य एव प्रायणीयो ऽतिरात्रः स उदयनीयः। सत्त्रादुदवसाय

---

१ कर्तं B Be.

२ Thus M; वाव पराचः स्वर्ग्यः B Be; वाचस्वर्ग्यः T; वाचस्वर्ग्यः Be 11 DU.

३ Text not wholly certain: वा अवाच पराच M; वावपराचः all the other MSS.

४ Thus U (sec. m.) B Be; प्रतिपत्तौ तत्प्रजापतौ तत्पितर॰ T Be 11 D; M reads as B, but with तत् also before प्रजापतिं।

५ Thus B Be; तद्वाच्यांततः Be 11 DU; तदाच्यांततः T; तावद्वाच्यंततः M.

ज्योतिष्टोमेनाग्निष्टोमेन चतुष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेनैकैको यजेत । ॥ ९ ॥ द्वितीयः ॥

अथातो ग्रहक्लृप्तेरेव सौमाꣳसैन्द्रवायवाग्रं प्रथममहः । शुक्राग्रं द्वितीयमाग्रयणाग्रं तृतीयं च चतुर्थं चैन्द्रवायवाग्रं पञ्चममहः । शुक्राग्रꣳ षष्ठं च सप्तमं चाग्रयणाग्रमष्टममहरैन्द्रवायवाग्रे[१] नवमदशमे[१] । इति[२] न्वा[२] अध्वर्युतो[२] । ऽथ छन्दोगक्लृप्ततो । [३]गायत्रीप्रातःसवनः [३]प्रथमस्त्रिरात्रस्त्रिष्टुम्माध्यंदिनो[४] जगत्तृतीयसवनो[५] । जगत्प्रातःसवनो द्वितीयस्त्रिरात्रो गायत्रीमाध्यंदिनस्त्रिष्टुप्तृतीयसवनस्त्रिष्टुप्प्रातःसवनस्तृतीयस्त्रिरात्रो जगन्माध्यंदिनो गायत्रीतृतीयसवन इति[६] । तस्मात्सच्छन्दस[७] उपयन्ति । ॥ १० ॥

---

१ Thus MT Be11 UD and Keś; चैन्द्रवायवाग्रमष्टममहः शुक्राग्रं नवममहरैन्द्रवायवाग्रं दशमम् B Be; on the whole passage cp. also Āp. xxi. 14. 5.

२ My correction; इतीन्वध्व० M; इतीन्वाध्व० T Be 11 DU; इतीमे अध्व० B Be.

३ Thus M only; गायत्रीप्रातःसवनं प्रथमं त्रिरात्रं the other MSS.

४ Thus M only (on the form त्रिष्टुम्म० cp. TS. vii. 2. 8. 3); त्रिष्टुप्मा० B Be11; त्रिष्टुभमा० Be TD; त्रिष्टुभोमा० U.

५ All exc. M जगतीतृती०।

६ T Be11 DU om. इति and read ०सवनस्तस्मा०; on this whole passage cp. Sāy. on Ait. Br. iv. 25. 10.

७ Thus all exc. M, which has: तस्मात्सर्मच्छंद and Be 11 which reads: तस्माच्छंदस। The reading of M might be correct.

अथातः पशुक्लृप्तेरेव मीमाꣳसैन्द्राग्नाः पशवः स्युरित्येक आहुरग्निरेयं लोको वायोरन्तरिक्षमसाविन्द्रस्य । यदैन्द्राग्नः पशुर्भवति वायव्यो वसाहोम इमानेव[1] तल्लोकान्प्रीणन्त[1] एषु लोकेषु प्रतितिष्ठन्तो यन्त्यथ[2] ये[3] ऽनैन्द्राग्नान्प्रतिपद्यन्ते[3] यथा श्रेयसे ऽनाहृत्य[4] पापीयस आहरन्ति[5] तादृक्तत्तस्मादैन्द्राग्नाः[6] पशवः स्युरित्येतदेकमतिरात्रपशवो ऽभितो मध्य ऐन्द्राग्ना । एकादशिना[7] अभितो मध्य ऐन्द्राग्नाः । सर्वाग्नेया[8] एव स्युरित्येतदेकꣳ । सर्वैन्द्रा[9] एव स्युरित्येतदेकꣳ । सर्वप्राजापत्या[10] एव स्युरित्येतदेकꣳ । सर्वैकादशिना[11] एव स्युरित्येतदपरं । तेषाꣳ सर्वैकादशिनैर्यतां प्रसिद्धमेव प्रथमे ऽहनि प्रथमामेका-

---

१ Thus M; इमानेवैतेलो° B Be; इमानेवतेलो° T Be 11 D; इमानेव-तेलो° U. – प्रीणंत M, प्रीणयंत all the other MSS.

२ यांत्यथ M.

३ Thus M (without, of course, avagraha); येन्येनैन्द्राग्नान्प्र° U; येन्येनैन्द्राग्नाः प्र° B Be; येन्येनैन्द्राग्नांप्र° T Be 11 D.

४ नान्येनाहृत्य M.

५ आहरति MU Be 11 D; आहरंति B Be.

६ तत् after तादृक् found in Be B only.

७ ऐका° M only, but cp. TS. vi. 6. 5. 1.

८ सर्व अग्ने° Be.

९ Thus MU; सर्व ऐन्द्रा B Be; सर्वैन्द्राग्ना T Be 11 D.

१० Thus M; सर्वे or सर्वाः प्रा° the other MSS.

११ सर्व ऐका° B Be.

दशिनीमालभन्त[1] आग्नेयस्य वारुणमुपालम्भ्यं[2] कुर्वन्ति । तथा-स्यैतानि दश मध्यमान्यहान्यनतिरिच्यमानाः पशवो ऽनुभवन्ति । प्रसिद्धमेवोत्तमे ऽहन्युत्तमामेकादशिनीमालभन्त[1] । आग्नेयस्य वा वारुणस्य वा वैश्वदेवमुपालम्भ्यं कुर्वन्ति । ॥ ११ ॥

तद् वा आहुर्यद्द्वादश[3] दीक्षा द्वादशोपसदो द्वादशाहं प्रसुताः कथमस्यैतान्यहानीष्टान्याप्रीतानि[4] पशुमन्ति भवन्तीति । तिस्र एकादशिन्यो ऽग्नीषोमीयो वैश्वदेवो ऽनूबन्ध्या । षट्त्रिंशतमेते[5] पशवः [6]षट्त्रिंशतमेतान्यहान्येवमस्यैतान्यहानीष्टान्याप्रीतानि पशुमन्ति भवन्तीति । तद् वा आहुर्यद्द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुताः कथं द्वादशाहेन संवत्सर आप्यत इति । द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्या । एतानि ह[7] वै[7] संवत्सरस्य वर्षिष्ठान्यहान्येता-

---

१ °भंत MB Be; °भत the other MSS. (cp. Āp. xxi. 14. 7); the last time DU also plural.

२ Thus M; वारुणस्य वा वैश्वदेवमुपा° B Be; वा वरुणस्य etc. (as B Be) T Be 11 UD.

३ यद् om. all the MSS. exc. M.

४ M only has preserved this correct reading, all the other MSS. are badly corrupt.

५ Thus all; are we to correct °त्रिंशत एते ?

६ Thus all, exc. M, which reads : षट्त्रिंशमेतान्य° ; are we again to correct षट्त्रिंशत एतानि ?

७ Thus B Be; ह om M; नवे TBe 11 DU.

न्यनु संवत्सर आप्यते । १समाप्तो द्वादशाहः । समाप्तः संवत्सरकाम । एवं द्वादशाहेन संवत्सर आप्यते१ । ॥ १२ ॥ तृतीयः ॥

संवत्सराय दीक्षिष्यमाणाः समवस्यन्ति । तद्ध स्मैतत्पूर्वे संवत्सरꣳ समवसायासते ऽन्योऽन्यस्यानूक्तं२ च मानुषं च विजिज्ञासमाना । उतो३ ह्येकः ग्रमरथस्य४ कर्ता भवति । ते चतुरहे पुरस्तान्माघ्यै पौर्णमास्यै दीक्षन्ते । तेषामेकाष्टकायां क्रयः संपद्यत । इति नु यदि समामविज्ञाय५ दीक्षन्ते । यद्यु वा एतस्यामेवैकाष्टकायाꣳ समां६ विजिज्ञासन्ते६ चतुरह एव पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्यै दीक्षन्ते । तेषामपरपक्षस्याष्टम्यां क्रयः संपद्यते । तेनैकाष्टकां न छम्बट्कुर्वन्ति । तेषां पूर्वपक्षे सुत्या संपद्यते । पूर्वपक्षं मासा अभि संपद्यन्ते । पूर्वपक्षे प्रसवः पूर्वपक्षे वैषुवतं पूर्वपक्ष उत्थानꣳ । समानं द्वादशाहिकं कर्म । तथैव षष्ठ्यामुपसद्युत्तरवेदिꣳ संनिवपन्ति यद्यनग्निचित्यं भवत्यथ यदि साग्निचित्यं प्रथमायामेवोपसद्युत्तरवेदिꣳ संनिवपन्ति । ॥ १३ ॥

१...१ Thus M; i. s. o. संवत्सरकाम एवं T Be 11 DU : संवत्सरक्रामेक्रम एवं; acc. to B Be the passage runs thus: एवं द्वादशाहेन संवत्सर आप्यते समाप्तो द्वादशाहः समाप्तः संवत्सरक्रतुः ।

२ Thus M Be; °स्यानुक्तं Be 11; °स्यायुक्तं BUD.

३ Thus M Be (sec. m.), cp. supra xvi. 1 (p. 245, 1); उद्गाता the other MSS.

४ The word occurs again xvii. 43 and Drāhy. v. 4. 11.

५ समांविज्ञाय M.

६ Thus M; समामविज्ञायासते Be; समामविज्ञासंते the other MSS.

तेषां द्वादश दीक्षा द्वादशोपसदः संवत्सरं प्रसुता । न संवत्सरे ऽग्निं चिन्वीतेत्येक आहुश्चिन्वत उ हैके । प्रसिद्धेन कर्मणोपवसथाद्यन्ति । तेषां प्रसिद्धं ज्योतिष्टोमो वैश्वानरः प्रायणीयो ऽतिरात्रः संतिष्ठते । तस्मिन्संस्थिते चतुर्विंशमुक्थ्यमारम्भणीयमुभयसामानमुपयन्त्यथाभिप्लवं षडहमुपयन्ति । [१]ज्योतिरग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो ज्योतिरग्निष्टोमस्तं चतुरुपयन्ति । रथंतरंबृहद्रथंतरंबृहदिति विपर्यासं पृष्ठे भवतः । पृष्ठ्यः षडहः । स मासस्तेनैवं संपन्नेन पञ्च मासान्यन्त्यथैतं षष्ठं मासं संभार्यं संभरन्ति । त्रयो ऽभिप्लवाः षडहास्तान्यष्टादशाहानि । प्रायणीयारम्भणीयौ । तानि विंशतिरहानि । पृष्ठ्यः षडहो ऽभिजित्त्रयः परःसामानः । स मासो । ऽथ वैषुवतमथैतं वैषुवते ऽहन्येकविंशमग्निष्टोममुपयन्ति बृहत्सामानं । तस्य सौर्यो ऽतिग्राह्यः सौर्यः पशुरुपालम्भ्यस्तद्धैतदेके[२] दिवैवैतेनाह्ना प्रतिपद्यन्त उदित आदित्ये दिवाकीर्त्यमहरिति वदन्तो । यथैवान्येषामह्नामेवमुपाकुर्यादिति मौद्गल्यस्तस्य महादिवाकीर्त्यं होतुः पृष्ठं विकर्णं ब्रह्मसामं भासो ऽग्निष्टोमो । ऽथोर्ध्वं वैषुवतात्त्रीनावृत्तान्स्वरानुपयन्त्यथ विश्वजितमुपयन्त्यथावृत्तं पृष्ठ्यं

---

१ The following acc. to M; the other MSS. are all more or less corrupt.

२ corrected hesitatingly; तद्धोतैवदेक M; तद्धोचैतदेके Be; तद्धोतेतदेके Be 11 D; तद्धोतत्तदेके B; तद्धोततदेके U pr. m.; तद्धोतुः तदेको U sec. m.; cp. infra. xvi. 16 (p. 263. 1) and xvii. 11.

षडहमुपयन्ति । [1]त्रयस्त्रिꣳशप्रभृत्याग्रयणायमेतदहर्भवत्यथा-वृत्तमेवाभिप्लवꣳ षडहमुपयन्ति ॥ १४ ॥

ज्योतिरग्निष्टोम आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्यो ज्योतिरेवाग्निष्टोमस्तं तथैव चतुरुपयन्ति । बृहद्रथंतरं-बृहद्रथंतरमिति विपर्यासं[2] पृष्ठे[3] भवतः । पृष्ठ्यः षडहः पुरस्तात्तं मासंस्तेनैवꣳ संपन्नेन पञ्च मासान्यन्त्यथैतꣳ[4] षष्ठं मासꣳ संभार्यꣳ संभरन्ति । द्वावभिप्लवौ षडहौ तानि द्वादशाहानि । गोआयुषी तानि चतुर्दश । चत्वार्यूर्ध्वं वैषुवतात्तान्यष्टादश । दशरात्रो महाव्रतं चातिरात्रश्च । स मासस्तदेतन्मासिपृष्ठं गवामयनम् । ॥ १५ ॥ चतुर्थः ॥

अनुत्सर्गं बृहद्रथंतराभ्यामित्योत्तमे मासि सकृत्पृष्ठान्युपेयु-स्तद्द्वितीयं गवामयनं । दशमास्यं[5] तृतीयमभिप्लवाश्चाचीयन्ति[5] च तदङ्गिरसामयनं । पृष्ठ्याश्चाचीयन्ति च तदादित्यानामयन-मग्निष्टोमाश्चाचीयन्ति च तत्प्रजापतेरयनं । प्रायणीयोदय-नीयावभितो मध्ये ऽग्निष्टोमास्तद्द्वितीयं प्रजापतेरयनꣳ । सर्वाग्निष्टोमा[6] एव स्युरिति तत्तृतीयं प्रजापतेरयनमथातो

---

१ त्रयस्त्रिंशप्र॰ M; त्रयस्त्रिंशत्प्र॰ the other MSS.

२ All MSS. exc. M ins. इति ।

३ Thus M; पृष्ठौ Be UD; पृष्ठ्यौ B; पृष्ठ्यौ Be 11.

४ Thus M; मासान्प्रयंत्य॰ B Be 11 DU (pr. m.); मासानुपयंत्य॰ Be

५ Thus M; दशममास्यं तृतीयमभि॰ Be; दशमासामभिप्ल॰ BU (pr. m.); दशममासमभिप्ल॰ Be 11 U (sec. m.).

६ सर्वेऽग्नि॰ Be.

ग्रहक्लृप्तेरेव मीमांसा । तद्धैतदेके[1] सारस्वतवैष्णवौ ग्रहौ गृह्णन्ति प्रायणीयादेवाग्रे ऽतिरात्रादोदयनीयाद्याग्ने सरस्वती यज्ञो विष्णुस्ते वाचं चैव यज्ञं च मध्यतः परिगृह्यानार्ता उदृचं गमिष्याम[2] इति वदन्तस्तद् वा आहुर्यद्वाचा[3] यज्ञस्तायते तेन सरस्वत्याप्ता[4] यद्[5] यज्ञस्तेन[5] विष्णुर्न वै[6] नो ब्राह्मणं भवति । सारस्वतवैष्णवौ ग्रहौ गृह्णीयादिति नैतदाद्रियेत[7] । नाद्रियेतेति[7] स्थितिः । ॥ १६ ॥

अथातो ऽंश्वदाभ्ययोरेव ग्रहणं । प्रायणीये ऽदाभ्यं गृह्णीयादंशुं वैषुवते ऽदाभ्यं महाव्रत उभौ प्रायणीय उभौ वैषुवत उभौ महाव्रते । यत्र क्व चैवैनौ[8] गृह्णीयादित्येतदपरमथातः परःसाम्नामेव ग्रहणं । ते वा एते परःसामानः पुरस्ताद्वैषुवतात्त्र्यहमन्वहमितः पराञ्चो गृह्यन्त उपयामगृहीतो ऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽस्योषधीभ्यस्त्वा

---

१ Thus Be; तद्धोतेतदेके MUD; तद्धोतदेके Be 11; तद्धोतेनदेके B; cp. supra p. 261, 14.

२ °ष्यामह Be and M, but, if I see right, the ह has been struck out.

३ °र्यांवाचा M.

४ All MSS. exc. M °प्ता इति ।

५ Thus M; यद्यज्ञस्तेन Be; यज्ञंयज्ञस्तेन the other MSS.

६ वै om. BUD Be (pr. m.).

७ Thus M ( cp. supra p. 252, 10 ); नैतदाद्रियेत नाद्रियेतेति the other MSS.

८ Thus M; चैनौ the other MSS.

प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ वैषुवते ऽह्नि शुक्राग्रा ग्रहा गृह्यन्ते समानं कर्माग्रयणाद्ग्रहादाग्रयण[1] गृहीत्वा चोन्परःसाम्नो गृह्णात्युपयामगृहीतो ऽस्यग्नये त्वौषधीभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ सौर्यर्चा[2] सौर्यमतिग्राह्यं गृह्णाति ॥ १७ ॥

तरणिर्विश्वदर्शत इत्यनुद्रुत्योपयामगृहीतो ऽसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिः सूर्याय त्वा भ्राजस्वत इत्यथावृत्तान्गृह्णात्युपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णाम्युपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतो ऽस्यग्नये त्वौषधीभ्यो जुष्टं गृह्णामीति सप्तैतदहरतिग्राह्या गृह्यन्त इति ब्राह्मणमथोर्ध्वं वैषुवतात्त्र्यहमन्वहमावृत्तानेव गृह्णाति वैश्वकर्मणादित्याभ्यां विपर्यासमुपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ वैश्वकर्मणं विश्वकर्मन्हविषा वावृधान इत्यनुद्रुत्योपयामगृहीतो ऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णामीत्यथादित्यमदितिर्न उरुष्यत्वित्यनुद्रुत्योपयामगृहीतो ऽस्यग्नये त्वौषधीभ्यो जुष्टं गृह्णामीत्यथ वैश्वकर्मणमथादित्यमथोर्ध्वं त्र्यहाद्वैश्वकर्मणादित्याभ्यामेव विपर्यासमेत्या

१ ग्रहं ins. M.

२ om. B Be 11 UD.

महाव्रतान्तावुभौ सह महाव्रते गृह्येते । अथैतं महाव्रतीये ऽह्नि प्राजापत्यमतिग्राह्यं गृह्णाति । त्वे क्रतुमपि वृञ्जन्ति विश्व इत्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेति । ॥ १८ ॥

अथातः पशुक्लृप्तेरेव मीमाꣳसोक्तैन्द्राग्नानां[१] प्रशꣳसातिरात्रपशवो ऽभितो मध्य ऐन्द्राग्ना । ऐकादशिना[२] अभितो मध्य ऐन्द्राग्नाः । सर्वाग्नेया[३] एव स्युरित्येतदेकꣳ । सर्वैन्द्राग्ना[४] एव स्युरित्येतदेकꣳ । सर्वप्राजापत्या[५] एव स्युरित्येतदेकꣳ । सर्वैकादशिना[६] एव स्युरित्येतदपरं । तेषाꣳ सर्वैकादशिनैर्यतां[७] प्रसिद्धमेवोत्तमस्य दशरात्रस्य तृतीये ऽहन्सप्तदश उक्थ्य एकादशिन्याप्यते । तस्य नवाहान्यपशून्यतिरिच्यन्ते । तेष्वेतान्नव ब्राह्मणवतः पशूनालभन्ते वैष्णवं वामनमित्येताꣳस्तेषामेवं[८] यतां बार्हस्पत्यो वैषुवते सवनीयः संपद्यते । तस्य सौर्यमुपालम्भ्यं कुर्वन्ति । यद्यु वा एतान्नव[९] ब्राह्मणवतः पशून्न विन्दन्ति नवैतानि मध्यमानि सांवत्सरिकाण्यहान्यैन्द्राग्नपशूनि

१ Thus M; मीमाꣳसा उक्तैवैन्द्राग्नानां Be; मीमाꣳसा ऐन्द्रा॰ B Be 11 UD.
२ Thus M; एका॰ the other MSS.
३ सर्व आग्ने॰ MSS. exc. M.
४ सर्व ऐ॰ MSS; this passage is missing in M.
५ सर्वप्रा॰ MSS. exc. M.
६ Thus M; सर्व ऐका॰ Be; सर्व एका॰ the other MSS.
७ Thus M; युतां or यताः the other MSS.
८ ॰मेवं M Be; ॰मेव the other MSS.
९ M; एतंनव Be 11 BUD; एतानेव Be.

कुर्वन्ति। तेषामेवं यतामैन्द्राग्नो वैषुवते सवनीयः संपद्यते। तस्य सौर्यमुपालम्भ्यं कुर्वन्ति। सावित्रो महाव्रते। तस्य प्राजापत्यस्तूपर ऐन्द्रश्चर्षभ उपालम्भ्यौ भवतः। ॥ १९ ॥

पञ्चमः ॥

श्वो महाव्रतमित्युपकल्पयते [1]ऽपरिमितान्यथानपरिमितान्दुन्दुभीꣳस्तावत[1] उ[2]वेवाजिसृतश्चर्म[2] चेडसंवर्त[3] च भूमिदुन्दुभिमार्षभं चर्म सलाङ्गूलं ब्राह्मणं च शूद्रं चार्द्रं[4] च चर्मकर्त[9]। स्रेङ्खꣳ होता कूर्चावध्वर्युर्हंसौ होत्रका[5] औदुम्बरीमुद्गातासन्दीमुपकल्पयते[1]। वाणं च शततन्तुमाघाटीः पिञ्छोलाः[6] कर्करीका इति तदु पत्नयः। कटपरिवारं च मिथुनौ चापरिमिताश्च दास्यस्तावत उ[7]वेवोदकुम्भानथैतं[7] महाव्रतीये ऽह्नि पञ्चविꣳशमग्निष्टोममुपयन्ति रथंतरसामानꣳ। समानं कर्मा माहेन्द्राद्ग्रहान्माहेन्द्रं ग्रहं[8] गृहीत्वाथैतान्संभारानायातयति। जघनेनाग्नीध्रं गर्त[9] खानयित्वार्षभेण क्रूरचर्मणोत्तरलोम्नाभि-

---

१...१ This passage found in M and Be sec. m. only.

२ तावत एवा° Be.

३ Corrected (cp. infra p. 267. 5); चेडासंवर्त M; चेषुसं° Be.

४ om. Be.

५ °ह्रंसौ° M Be.

६ पिꣳखोलाः M here and infra.

७ Thus M; एवोद° the other MSS.

८ om. all exc. M Be.

९ कर्त M Be 11 (pr. m.) D.

विघ्नन्ति[१] । तस्य लाङ्गूलमुत्खिद्य हन्तानूपतिष्ठते । ऽथैतान्दुन्दुभीननुदिशमासञ्जयति । तानाहननैरनाघ्नन्त[२] एते हन्तारो ऽनूपतिष्ठन्ते । ऽथैते रथाः समन्तं देवयजनं परीत्योत्तरतस्तिष्ठन्ति[३] । तेषां तिसृधन्वी राजपुत्रो मुख्यो भवति । ॥ २० ॥

तस्मा अग्रेणाग्नीध्रमिडसंवर्ते[४] चर्मकर्तं व्यवास्यति । तं काल एव शस्त्र्यादृणत्त्यथैतौ ब्राह्मणश्च शूद्रश्चान्तरेण सदोहविर्धाने तिष्ठत आर्द्रं चर्मकर्तमादाय । प्रेङ्खं होतारोहते । कूर्चावध्वर्युरुपस्तृणीते हसीर्हीचका । औदुम्बरीमुद्गातासन्दीमारोहत्यादत्ते वाणं शततन्तुमाघाटीभिः पिच्छोलाभिः कर्करीकाभिरित्युद्गातारं पत्नयः पर्युपविशन्त्यथ दक्षिणे वेद्यन्त कटपरिवारे मिथुनौ संप्रवादयतो[५] । ऽथैता दास्य उदकुम्भानधिनिधाय मार्जालीयं पर्युपविशन्त्यथाध्वर्युः कूर्चयोरासीनो माहेन्द्रस्य स्तोत्रमुपाकरोति । स्तुवते माहेन्द्राय । प्रस्तुते सान्नि संप्रैषमाहाजिसृत आजिं धावत दुन्दुभीन्समाघ्नताभिषोतारो ऽभिषुणुताग्नीदाग्निं विनयोलूखलमुद्वादय प्रतिप्रस्थातः

---

१ °भिविनिघ्नंति M; cp. supra XI. 10 (p. 79. 4) and infra XVII. 39, XVIII. 18.

२ Corrected; तानाहाहननैराहनत M; तानाहननैरनाहत B Be 11 UD; तानाहननैरन्वाहनना Be.

३ Thus M; परीत्यरटंतोत्तरतस्ति° all the other MSS.

४ Thus M; °मिषुसंवर्ते all the other MSS.

५ Thus M; संप्रवादेतो BUD (pr. m.) Be 11 (pr. m.); संभयतो Be 11 (sec m.) D (sec. m.); संप्रवादेयतो Be.

सौम्यस्य विद्धीति । यथासंप्रैषं ते कुर्वन्ति । धावन्त्याजिसृत । आघ्नन्ति दुन्दुभीन्संप्रवदन्ति वाच । आघाटीभिः पिञ्छोलाभिः कर्करीकाभिरित्युद्गातारं पत्नय उपगायन्ति । ॥ २१ ॥

भद्रमु नाम सामास्ति । तदु वाचोपगीयते[१] । ऽथैष[१] तिसृधन्वी राजपुत्रश्चर्मावभिनत्ति । तं ब्राह्मणो ऽनूपतिष्ठते मापरात्सीर्मातिव्यात्सीरिति । तत्तथैव त्रिभिरन्तर्हितमवभिनत्त्यथैतौ[२] ब्राह्मणश्च शूद्रश्चार्द्रे चर्मकर्ते व्यायच्छेते इमे ऽरात्सुरिमे सुभूतमक्रन्निति ब्राह्मण । इम उद्वासीकारिण इमे दुर्भूतमक्रन्निति वृषलो । ब्राह्मणः संजयति । नश्यति वृषलः । संवर्तते मिथुनावथैता दास्य उदकुम्भानधिनिधाय मार्जालीयं परिनृत्यन्त्युपस्थानुपघ्नत्य दक्षिणान्पदो निघ्नन्तीरिदंमधुं[३] गायन्त्यस्तासाꣳ सकृत्परीतानां प्रथमां वाचयति ॥ २२ ॥

गाव एव सुरभयो गावो गुग्गुलुगन्धयः । गावो घृतस्य मातरस्ता इह सन्तु भूयसीर्हैमहाꣳ इदं मध्वित्युपस्थानुपघ्नत्य दक्षिणानेव पदो निघ्नन्ति । द्वितीयं परीतानां प्रथमामेव वाचयति ननु गावो मङ्गीरस्य गङ्गाया उदकं पपुः । पपुः सरस्वत्यै नद्यै ताः[४] प्राचीरुज्जगाहिरे[४] हैमहाꣳ इदं मध्वित्यु-

---

१ Thus M ; ०पगायंतेथैष BUD Be 11 ; ०पगायंत्यथैष Be.

२ I. s.o. अवभिनत्ति B Be 11 UD: भवति ।

३ Thus M and cp. Āp. XXI. 19. 18 ; निघ्नंतीदं० the other MSS.

४ Thus M ; ताः प्रातरप्राचीनं जगाभिरे (or जगाभिः) the other MSS. ; Keś. : ताः प्राचीस्रोर्जंगाधिरे ; cp. Āp. XXI. 20. 3.

पश्चानुपहृत्य दक्षिणानेव पदो निघ्नन्ति । तृतीयं परीतानां प्रथमामेव वाचयति यदा राखन्त्यौ[१] वदतो[१] ग्राम्यं[२] मङ्कीरदाग्नकौ[२] । क्षेमाध्यवस्यतो ग्रामे[३] नानड्वाꣳस्तप्यते वहन्देमहाꣳ इदं मध्वित्यथैना उत्तरेण मार्जालीयं तिष्ठन्त्यो वाचयतीदमेव मधु सारघमयꣳ सोमः सुतो बृहत् । तमिन्द्र परितातृपीर्हैमहाꣳ इदं मध्विति । ता अत ऊर्ध्वमिदं मध्विदं मध्विदं मध्वित्येव[४] परियन्ति । तेषां य एव प्रायणीयो ऽतिरात्रः स उदयनीयः । सत्त्रादुदवसाय ज्योतिष्टोमेनाग्निष्टोमेन[५] चतुष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेनैकैको यजेत । ॥ २३ ॥ षष्ठः ॥

स्वर्गकामो द्विरात्राय दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते द्विरात्रस्य मे सतो ऽमावास्याया उपवसथीये ऽहन्पूर्वमहः संपत्स्यत उत्तरस्मिन्नुत्तरमिति । तस्य तथा संपद्यते । ऽभिप्लवः पूर्वमहर्भवति गतिरुत्तरं । ज्योतिष्टोमो ऽग्निष्टोमः पूर्वमहर्भवति । तेजस्तेनावरुन्द्धे । सर्वस्तोमो ऽतिरात्र उत्तरꣳ । सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै । गायत्रं पूर्वं ह्न्साम भवति । त्रैष्टुभ-

---

१ Uncertain ; राखंद्यौर्वदतो M ; राखद्योद्यो वदतो Be 11 ; रात्रौखद्योतौ वदतो Be ; घाराद्यौर्वदतो U ; D indistinct.

२ Thus M; ग्राम्यमंकौ॰ Be Be 11.

३ ग्रामे M ; ग्रामो the other MSS.

४ ॰त्येवमेव M.

५ Thus M Be ; ज्योतिष्टोमेन चाग्निष्टोमेन the other MSS.

मुत्तरे ' रथंतरं पूर्वं ऽहन्साम भवति ' बृहदुत्तरे ' वैखानसं पूर्वं ऽहन्साम भवति ' षोडश्युत्तरे ' हविष्मन्निधनं पूर्वमहर्भवति ' हविष्कृन्निधनमुत्तरं ' नानैवार्धमासयोर्भवतो नानावीर्ये भवत इति ब्राह्मणꣳ ' संतिष्ठते द्विरात्रस्त्रिरात्रेण यक्ष्यमाणो भवति ' स उपकल्पयते सहस्रं ' तस्मिन्नुन्नतो वेहद्वामन इति भवन्त्यथास्यैषा सहस्रतम्यन्यतएनी कण्डूकृतोपकृप्ता[1] भवति ' दीक्षते ' रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति ' द्वादशोपसदः ' ॥ २४ ॥

तायते प्रथमे ऽहन्नग्निष्टोमस्तस्य त्रिवृत्प्रातःसवनं पञ्चदशं माध्यंदिनꣳ सवनꣳ सप्तदशं तृतीयसवनꣳ ' स दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोति त्वꣳ सहस्रमानय। उन्नत उद्वलस्याभिनस्त्वचम् । सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरित्युन्नत एतेषां त्रयाणां त्रिꣳशच्छतानां[2] प्रथमो नीयते ' ऽहीनसंततिं करोति ' तायते द्वितीये ऽहन्युक्थ्यस्तस्य पञ्चदशं प्रातःसवनꣳ सप्तदशं माध्यंदिनꣳ सवनमेकविꣳशं तृतीयसवनꣳ ' स दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा हिꣳसीः सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति ' वेहद्वेतेषां त्रयाणां त्रिꣳशच्छतानां[2] प्रथमा[3] नीयते ' ऽहीनसंततिं करोति ' तायते तृतीये ऽह-

१ Thus M and Karmāntasūtra; कमंडलुकृतो॰ the other MSS.

२ Sic MSS. !

३ प्रथमो M Be.

त्रतिरात्रस्तस्य सप्तदशं प्रातःसवनमेकविंꣳशं माध्यंदिनꣳ सवनं त्रिणव आर्भवः पवमानस्त्रयस्त्रिंꣳशमग्निष्टोमसामैकविंꣳशान्युक्थानि सषोडशिकानि । षोडशं प्रथमꣳ रात्रिसाम पञ्चदशानीतराणि त्रिवृद्राथंतरः[1] सन्धिः । स दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोति त्वꣳ सहस्रस्य प्रतिष्ठासि[2] वैष्णवो वामनस्त्वम् । सा[3] मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति । वामन एतेषां त्रयाणां चत्वारिꣳशच्छतानां[4] प्रथमो नीयते । नात्राहीनसंततिं करोति । ॥ २५ ॥

अथैताꣳ सहस्रतमीमुत्तरेणाग्नीध्रं[5] पर्याणीयाहवनीयस्यान्ते द्रोणकलशमवघ्रापयेदाजिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति । प्रजयैवैनं पशुभी रय्या समर्धयति प्रजावान्पशुमान्रयिमान्भवति य एवं वेदेति ब्राह्मणमथ वै भवति तया सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादिति । स तया सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहोत्युभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा

---

१ Thus M; बृहद्राथंतरः Be; बृहद्रथंतरः the other MSS.

२ प्रतिष्ठा असि all, also M.

३ स M.

४ Thus M only (sic!); चत्वारिꣳशतानि all the other MSS.

५ °ग्नीध्रीयं MSS.; U sec. m. °ग्नीध्रं ।

व्याहाश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सुराम्णः सोमान्प्रस्थितान्प्रेष्येति। मैत्रावरुणो होता यक्षदश्विना सरस्वतीमिन्द्रꣳ सुत्रामाणमिति। पुत्रमिव पितरावश्विनोभेति यजत्यंहाव्यग्ने हविराश्ये त इति वषट्कृते जुहोति॥ ३५॥

यस्मिन्नश्वास ऋषभास उक्षण इत्यनुवषट्कृते हुत्वाश्विनस्य सꣳस्रावꣳ सारस्वते ऽवनयति। सारस्वतस्य सꣳस्रावमैन्द्रे। तं ब्राह्मणो भक्षयति नाना हि वां देवहितं यदत्रेति द्वाभ्यां। [1]यदि ब्राह्मणं न विन्दति वल्मीकवपायामवनयत्येतेनैव मन्त्रेणाथैतानि पात्राणि बल्कसस्य[2] पूरयित्वा पर्णमये श्येनपत्त्रमवगूहति। तद्विशाख्यावुच्छ्रित्य दक्षिणाग्रं वꣳशं प्रोहति वꣳशे शिक्यꣳ सजति[3] शिक्ये शतातृण्णाꣳ शतातृण्णायां वाले वाले शतमानꣳ हिरण्मयैताꣳ सुराꣳ सप्रेकामादाय शतातृण्णायाꣳ समवनयति सोमप्रतीकाः पितरस्तृप्णुतेति। क्षरति[4] शतातृण्णेत्युपतिष्ठन्ते[5] पवमानः सुवर्जन इत्येतेनाष्टर्चेनाथ यदि सोमातिपवितो भवति पितृणां याज्यानुवाक्याभिरुपतिष्ठन्त उदीरतामवर उत्पराम आहं पितॄन्सुविद-

---

१ अथ ins. MT Tr.

२ Thus H; वल्कसस्य MTB Be U; बिलसस्य Tr.

३ Thus M Tr; सजयति T; सचति B Be U; सचयति H.

४ Thus Tr Be HU (sec. m.); क्षसि (sic) B; क्षरंति U (pr. m.); क्षरति MT.

५ Plural T Tr U (pr. m.); sing. the other MSS.

चाꣳ अवित्सीदं पितृभ्यो नमो अस्त्वित्यध्वर्युर्होता ब्रह्मा त उपतिष्ठन्ते । यत्रैव शतातृण्णां धारयति तन्निदधाति प्रतिष्ठित्या इति ब्राह्मणं । तदेवैनां निधाय दक्षिणतो निदधात्यथैतानि पात्राणि पुराणभस्मनः खरे सादयति ॥ ३६ ॥

पितृभ्यः स्वधाविभ्यः स्वधा नमः पितामहेभ्यः स्वधाविभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नम इत्यथ गर्भिणीं वडवां ददात्यथाप उपस्पृश्य बार्हस्पत्यस्य पशुपुरोडाशं याचति । तेन प्रचरति[1] देवताप्रभृतिनेडान्तेनाथ पशुभिश्चरति मनोताप्रभृतिभिरिडान्तैरथैतान्पुरोडाशान्याचत्यैन्द्रमेकादशकपालꣳ सावित्रं द्वादशकपालं वारुणं दशकपालमिति । तैश्चरति देवताप्रभृतिभिरिडान्तैरनूयाजैश्चरित्वा प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूꣳषि जुहोति यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथैतमवभृथꣳ सꣳसादयन्ति[2] यत्किंचित्सुरालिप्तं भवति तत्सह हृदयशूलानि भवन्त्येतत्समादायान्तरेण[3] चात्वालोत्करावुदङुपनिष्क्रामन्ति ॥ ३७ ॥

द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम्।
ताभ्यामिदं विश्वं भुवनꣳ समेत्यन्तरा पूर्वमपरं च केतुमिति ।

---

१ चरति M Tr.

२ Thus M Tr Be; °सादयति HBU; संप्रकिरंति T.

३ भवंत्ये° HU; भवंतीत्ये° M; भवतीत्ये° T; भवत्ये° B Be.

प्रसिद्धꣳ हृदयशूलैश्चरित्वाथैतानि पात्राण्युदकान्ते पराञ्चि सादयति यस्ते देव वरुण गायत्रच्छन्दाः पाशो ब्रह्मन्प्रतिष्ठितः । तं त एतेनावयज इति पर्णमयं ' यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः क्षत्रे प्रतिष्ठितः । तं त एतेनावयज इति नैयग्रोधं ' यस्ते देव वरुण जगतीछन्दाः पाशो विक्षु प्रतिष्ठितः । तं त एतेनावयज इत्याश्वत्थं ' यस्ते देव वरुणानुष्टुप्छन्दाः पाशः पशुषु प्रतिष्ठितः । तं त एतेनावयज इति शतातृण्णां ' तूष्णीꣳ सतं वालं च ' प्रसिद्धो ऽवभृथः ' साम चैव नात्र देवीराप एष वो गर्भ इति चाथाप्रतीचमायन्ति वरुणस्यान्तर्हित्यै ' प्रपद्ये समिधः कुर्वत एधो ऽस्येधिषीमहीत्येत्याहवनीये ऽभ्यादधाति समिदसि तेजो ऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्ते ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसेत्यथ कुसीदेन सक्तुहोमेन चरत्यथ देवता उपस्थाय यूपमुपतिष्ठते । संतिष्ठते सौत्रामणी[1] ' ॥ ३८ ॥ एकादशः ॥

[2]वेदमधीत्य स्नास्यन्नुपकल्पयत एरकां चोपबर्हणं च

---

१ सौत्रामणिः all exc. M; at the close of this adhyāya T adds इति चरकसूत्रम् ।

२ The text of adhyāya 12 is based on M(ackenzie), cp. Preface, p. II, and on the following MSS. of the Gṛhyasūtra: Ma(dras), on the whole a very good copy in grantha; E(gmore), nāgarī copy of grantha original; T(anjore), grantha, breaking of after the words अपाशो ऽसीत्युत्क्रामत्य in kh. 41; H(aug), B(enares), these two closely related and on the whole rather bad. I made

नापितं च क्षुरं च दारूणि चोपस्तरणं च वल्कलाꣳश्च दन्तधावनमुष्णाश्चापः शीताश्च सर्वसुरभिपिष्टं[1] चाञ्जनं च स्रजं चादर्शं चाहतं च[2] वासः प्रावरणं[3] च वसनान्तरं बादरं मणिꣳ सुवर्णोपधानꣳ सूत्रं च[4] प्रवर्तौ च दण्डं चोपानहौ च[5] छत्रमानडुहं चर्म सर्वरोहितमित्येते ऽस्य संभारा उपक्लृप्ता भवन्ति । स्नानस्य मीमाꣳसा । रोहिण्याꣳ स्नायादित्येकं । प्राजापत्यं वा एतन्नक्षत्रं । तदस्य प्राजापत्य एव नक्षत्रे स्नातं भवत्यथो सर्वान्रोहान्रोहाणीति[6] । तिष्ये स्नायादित्येकं । बार्हस्पत्यं वा एतन्नक्षत्रं । तदस्य बार्हस्पत्य एव नक्षत्रे स्नातं भवत्यथो बृहस्पतिप्रसूतो ऽसानीत्युत्तरयोः फल्गुन्योः स्नायादित्येकं । भाग्यं वा एतन्नक्षत्रं । तदस्य भाग्य[7] एव

---

also use of G (gṛhyaprayoga MS. Burnell cvii, which cites often literally passages of the Gṛhya), Prm. (Prayogamālā printed at Bombay), Pś (Prayogaśikhāmaṇi, No. 3108 of the Leiden collection), Ks (Kanakasabhāpati's kārikā, Burnell cix) and Pc (Prayogacūḍāmaṇi, Telugu MS., collection Mackenzie No. 21). Adhyāya 13 is contained only in M and E. The two adhyāyas 12 and 13 are now also printed in the Grantha Edition of the Baudhāyana smārtasūtra, designed by me as "Ed."

१ सार्व॰ EG.

२ only in Ed. TE.

३ Thus EHG; प्रावारं MT, प्रपारं Ma. प्रवारणं Ed.

४ om. HBM (sec. m.).

५ om. THB Ma.

६ Thus B; रोहतीति i.s.o. रोहाणीति the other MSS. and Ed.

७ भग्य TM Ma.

नक्षत्रे स्नातं भवत्यथो भाग्यो ऽसानीति। हस्ते स्नायादित्येकं। सावित्रं वा एतन्नक्षत्रं। तदस्य सावित्र एव नक्षत्रे स्नातं भवत्यथो सवितृप्रसूतो ऽसानीति। चित्रायां स्नायादित्येकमैन्द्रं वा एतन्नक्षत्रं। तदस्यैन्द्र एव नक्षत्रे स्नातं भवत्यथो चित्रो ऽसानीति। विशाखयोः स्नायादित्येकमैन्द्राग्नं वा एतन्नक्षत्रं। तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवत्यथो विशाखो ऽसानि[1] प्रजया पशुभिरित्येतेषामेकस्मिन्नापूर्यमाणपक्षे[2] पुरादित्यस्योदयाद्व्रजमभि प्रपद्यते। नैनमेतदहरादित्यो ऽभितपेत्तदह[3] स्नातानामु[3] ह[4] वा[4] एष एतत्तेजसा यशसा तपत्यन्तर्लोम्ना चर्मणा व्रजमभिविघ्नन्ति[5]। पूर्वार्धमध्ये व्रजस्याग्निमुपसमाधाय संपरिस्तीर्याहरन्त्येतान्संभारान्सकृदेव सर्वान्त्सह[6] सर्वाणि मानुषाणीत्येतस्माद्ब्राह्मणाद्दक्षिणतो[7] ब्राह्मण[8] उपविशत्युत्तरत[8] उदपात्रं पालाशीं च समिधं निदधात्य-

---

१ Thus HB; सानीति the other MSS. and Ed.

२ Thus MB; °त्येषामेकस्मिन्न° H; °त्येकेषामेतस्मिन्न° Ma TE. and Ed.

३ Thus all exc. Ma and Ed., which have तदहस्स i.s.o. तदह and E: °तपेन्मध्यंदिनकृदहस्स स्नाता°; Bhāradvāja also has the reading accepted by me on the authority of the best MSS. (= तदहः-स्नातानाम् as a compositum ?).

४ °मु ह वा only MT; °मुखा दा Ma; °मुखं the other MSS.; मुखं वा Ed.

५ °भिनिघ्नंति MSS. (and Ed.) exc. E, which om. the second præpos.; cp. *supra* XI. 10 (p. 79, 4), XVI. 20 (p. 267, 1), XVIII. 18.

६ Thus MT; सर्वाणि i.s.o. सर्वान् HB; संभरति i.s.o. सर्वान् E Ma., Ed.

७ Before दक्षिणतो Ma ET and Ed. ins. दर्भेषु।

८ Thus M Ma HB; ब्राह्मणमुपवेशयत्यु° E; ब्रह्माणमुपविशत्यु° T.

परेणाग्निमुदीचीनप्रतिषेवणामेरकाꣳ साधीवासामास्तीर्य[1] तस्यां प्राङ्मुख उपविशत्युत्तरतो नापित उत्तरत उपबर्हणमामध्यंदिनं भिक्षां दद्यादपीह[2] गां पचेद्वशा चेदस्य[3] स्याद्चैतां[3] पालाशीꣳ समिधमाज्येनाक्त्वा मध्यंदिने ऽभ्यादधाति ॥ ३९ ॥

इमꣳ स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया । भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं तव स्वाहेत्यथैरकायामुदीचीनशिरा निपद्यते त्र्यायुषं[4] जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य[4] त्र्यायुषमृषीणां[4] त्र्यायुषं[4] यद्देवानां त्र्यायुषं[4] तन्मे अस्तु त्र्यायुषमित्युच्यमानमनुमन्त्रयते[4] शिवा मे भवथ सꣳस्पृश इति क्षुरमभिमन्त्रयते क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीरित्युप्यमानमनुमन्त्रयते यत्क्षुरेण वर्चयसि[5] वप्ता वपसि केशश्मश्रु वर्चय मे मुखं मा म आयुः प्रमोषीरिति श्मश्रूण्येवाग्रे वपते ऽथोपपक्षावथ केशान्यथोपपादमितराण्यङ्गान्यैतस्माद्घोषा[6] जरसा[6] पूर्वं आयुषि प्रयान्ति पूर्वं आयुष्यन्नादा भवन्ति

१ Thus Ma TE, Ed.; ॰मुपस्तृणीते M; HB om. this passage.

२ ॰दपि ह Ed.

३ Thus E Ma; चेतस्य स्याद॰ TH; चेतस्य स्याद॰ B; चेस्याद॰ M; चेदभ्यस्याद॰ Ed.

४ Thus EM Ma G, Ed.; त्रियायुष॰ THB Prm.

५ Thus all exc. E: वर्धयसि and T: वर्चसि ।

६ Or should we write ॰षाजरसा? What may be the sense of these words?

य एवं विद्वाꣳसो लोमानि वापयन्ते । स यदि लोमानि वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि सꣳहृत्य नखानि निकृन्तयीतायैतानि समुच्चित्य ब्रह्मचारिणे प्रयच्छन्नाहेमानि हृत्वा दर्भस्तम्बे वोदुम्बरमूले वा निधत्तादिति । तानि स तत्र निदधात्यपरेणाग्निं प्राङ्मुख उपविश्य मेखलां विस्रꣳसयत इमां विष्यामि वरुणपाशमिति । यो ऽस्य तत्र[1] रातेः[1] पुत्रो वान्तेवासी वा भवति तस्मै प्रयच्छन्नाहेमाꣳ हृत्वा न्यग्रोधे वोदुम्बरमूले वा निधत्तादिति । तामु[2] स तत्र निदधातीदमहममुष्यामुष्यायणस्य शुचा पाप्मानमवगूहाम्युत्तरस्य[3] द्विषद्म इति । वृकलैः प्रधाव्य दन्तान्विधावयते[4] ऽन्नाद्याय व्यपोहध्वं भगो राजायमागमत् । स मे मुखं प्रसर्पतु वर्चसे च भगाय चेत्युभयीरपः संनिषिञ्चत्युष्णासु शीता आनयति दैवमानुषस्य[5] व्यावृत्त्या इति । तामामञ्जलिनोपहृत्याभिषिञ्चत्यापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति तिसृभिः । षोढाविहितो वै पुरुष इत्येतस्माद्ब्राह्मणादथैतस्य[6] सर्वसुरभिपिष्टꣳ समुदायुत्य त्रिः प्रसिञ्चति ॥ ४० ॥

---

१ तत्राराते: T Ma.

२ Thus TM Ma; ताम् EHB, Ed.

३ Thus (अवगूहामि) MHB Prm Pśm; अपगू॰ T Ma EG Pc. Ed.

४ Thus M Prm; ॰धापयते all the other MSS. and G, Ed.

५ दैव॰ ET and Bhāradvāja; देव॰ the other MSS., Ed. and the Prayogas.

६ ॰थैतस्य Ma E, Ed.; ॰थैनस्य MHB; T indistinct.

नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीरित्यनुलिम्पते[१] ऽप्सरासु[१] च[२] यो गन्धो गन्धर्वेषु च यद्यशः । दिव्यो यो मानुषो गन्धः स मामाविशतादित्यथाहतं परिधत्ते स्वा मा तनूराविश शिवा मा तनूराविशेत्येवमेवोत्तरासङ्गमेवमेवातत[३] ऊर्ध्वमथैतं बादरं मणिꣳ सुवर्णोपधानꣳ सूत्रे प्रोत्य दर्व्यामाधाय दर्विदण्डे[४] सूत्रेण पर्यस्य जुहोतीयमोषधे त्रायमाणा सहमाना सहस्वती । सा मा करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चस्विनमन्नादं[५] करोतु स्वाहेत्यथैनमुदपात्रे[६] ऽनुपरिप्लावयति[६] विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विष इत्यपाशो ऽसीत्युत्क्राम्णया परिहरति वध्यꣳ हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्या इत्येतस्माद्ब्राह्मणादथैतौ प्रवर्तौ सूत्रे प्रोत्य दर्व्यामाधाय दर्विदण्डे[७] सूत्रेण पर्यस्य जुहोत्यायुष्यं वर्चस्यꣳ सुवीर्यꣳ रायस्पोषमौद्भिद्यम्[८] । इदꣳ हिरण्यं वर्चसे [९]जैत्रायाविशतादिमꣳ[१०]

१ Thus Ma, Ed.; °नुलिंपेत्यप्स° E; °नुलिंपंतेप्स° T; °नुलिंपेदप्स° M; °नुलिंपेत्प्स° HB.

२ MTE and Ed. om.

३ Thus (उत्तरासंगम्) ET, Ed.; °मेवासंगमे° M Ma; HB corr.

४ Thus M Ma; दर्वौ° ET Prm., and Ed.; HB om.

५ °स्विनम° HM Ma B; °सिनम° T, Ed.; E indistinct.

६ Thus M; °पात्रेण परि° T Ma E Prm, Ed.; पात्रेणानुपरि° HB Pś.

७ Thus M Ma HB; दर्वौ° EG and Ed.

८ °मौद्भद्यम् M Ma G and Ed.; °मौद्भिदम् EHB Prm Pś.

९ Thus MG, Ed.; जैत्राया° the other MSS. and Prm Pś.

१० इमꣳ M Ma EG and Ed.; इमाꣳ H; इमा B.

रयिꣳ स्वाहेति । द्वितीयां जुहोति शुनिमिवाहꣳ[१] हिरण्यस्य पितुरिव नामाग्रभैषम्[२] । तन्मा करोतु सोमवर्चसꣳ सूर्यवर्चसं ब्रह्मवर्चस्विनमन्नादं[३] करोतु स्वाहेति । तृतीयां जुहोत्युच्चैर्वाजि[४] पृतनासहꣳ[५] सभासाहं धनंजयम् । सर्वाः समृद्धीर्ऋद्धयो हिरण्ये याः समाहिताः स्वाहेति । चतुर्थीं जुहोति विराजं च स्वराजं चाभिष्टिर्या[६] च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳसृजामसि स्वाहेति । पञ्चमीं जुहोति यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु । यशो विश्येषु शूद्रेष्वहमस्मि यशस्तव[७] स्वाहेत्यथैनावुदपात्रे[८]ऽनुपरिप्लावयति[८] विश्वा उत त्वया वयमित्येतया । तयोरन्यतरमादाय दक्षिणे कर्ण आबध्नीत[९] आयुष्यं वर्चस्यमित्येताभिः

१ Thus (शुनिम्) M Ma Prm Pś and Ed.; शुनीम् EG; शुमिम् HB; शुनम् only Ks.

२ Thus Pś; नामाग्रभैजषं Prm; नामाग्टहीत्वमग्राहं E; नामग्टहं M Ma BHG; नामाग्रहं, Ed.

३ ॰स्विनम॰ M Ma HB; ॰स्विनम॰ EG and Ed.

४ ॰र्वाजि all exc. G, which has rightly ॰र्वादि ।

५ Thus the MSS.; पृतनाजि the Prayogas.

६ Thus Prm; चाभिश्रीया G; चाभिश्रीया Pś; चाभिषीर्या Pc; चाभिश्रीर्या M Ma and Ed.; चाभिश्रीर्या E; चाभिश्रार्या BH.

७ Thus M Prm Pc G; यशस्तप Ma E, Ed.; यशन्तव Pś; यशत HB.

८ Thus M; ॰पात्रेणपरि॰ Ma E Prm, Ed.; ॰पात्रेणानुपरि॰ B; ॰पात्रेणमुपरि॰ H.

९ Thus HB; आबध्नाति M Ma E Prayogas.

पञ्चभिरयैनमनुपरिवर्तयत[1] ऋतुभिष्ट्वार्तवैः संवत्सरस्य धायसा[2] तेस्त्वा सहानुकरोमीत्येवमेवोत्तरं प्रवर्तमाबध्नीते ऽथ स्रजं प्रतिमुञ्चते[3] ॥ ४१ ॥

शुभिके शिर आरोह शोभयन्ती मुखं मम । मुखꣳ हि मम शोभय भूयाꣳसं च भगं कुरु ॥ यां त्वा जहार जमदग्निः श्रद्धायै कामायान्यै[4] । तां त्वेमां प्रतिमुञ्चे[5] ऽहं[5] वर्चसे च भगाय चेति त्रैककुदेनाञ्जनेनाङ्क्ते यदाञ्जनं त्रैककुदं जातꣳ हिमवत उपरि । तेन वामाञ्जे मयि पर्वतवर्चसमस्त्वित्यादर्शे परिपश्यते यन्मे मनः परागतमादर्शे परिपश्यतः । इदं तन्मयि पश्याम्यायुष्यं वर्चस्यं मे अस्त्वित्यथोपानहावुपमुञ्चते द्यौरसीति दक्षिणे पादे पृथिव्यसीत्युत्तरे ऽथ दण्डमादत्ते सखा मा गोपायेति छत्रमादत्ते दिव्यो ऽसि सुपर्णो ऽन्तरिक्षान्मा पाहीति सो ऽत्रैवास्त आ नक्षत्राणामुदयादथोदितेषु नक्षत्रेषूपनिष्क्रम्य दिश उपतिष्ठते देवीः षडुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वमिति मा हास्महि प्रजया मा तनूभिरिति नक्षत्राणि मा राधाम द्विषते सोम राजन्निति चन्द्रमसꣳ

१ Thus M ; ०वर्तयति Ma, Ed. ; ०वर्तनि H.

२ धायसा MBH, Ed. ; धायया Ma : यायसा E (from grantha original !).

३ Thus M Ma E ; ०मुचते B ; ०मुच्यते H ; ०मुञ्चति Ed.

४ Thus M Prm Ks Pś ; कामायान्ये Ma, Ed. ; राकायान्यै HB.

५ Thus Prm G ; ०मुंचतु Ma E ; ०मुंच M ; ०मुञ्चामि Ed.

मनुपस्थाय[1] यत्रयत्र[2] कामयते तदेतीत्येतत्समावर्तनम् ॥ ४२ ॥ द्वादशः ॥

अथेतरत्तूष्णामेव[3] तीर्थे स्नात्वोदेत्यथ यदि रथं लभते रथंतरमसीति दक्षिणं चक्रमभिमृशति बृहदसीत्युत्तरं वामदेव्यमसीति मध्यमथ रथं प्रवर्तमानमनुमन्त्रयते ऽयं वामश्विना रथो मा दुःखे मा सुखे रिषदित्यथ यदि शमरथं करिष्यन्भवत्यप उपस्पृश्येमामभिमृशतीह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिह रमतामित्यथास्मा आचार्यः कूर्चमाहारयति तं प्रदक्षिणं पर्यस्योदगावृत्त उपविशति पुरस्तादेनं प्रत्यञ्चमुपोहते राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषमित्यथास्मा उदकमाहारयति तेनास्य पादौ प्रक्षालयत्यवनेक्तः[4] पाणी संमृशति मयि महो मयि भगो मयि भर्गो मयि यश इत्यप उपस्पृश्य मयीन्द्रियं वीर्यमित्युरः प्रत्यात्मानं प्रत्यभिमृशते ऽथास्मा अन्यदाहारयति तत्प्रतिगृह्णात्या[5] म[5] अगाद्वर्चसा[5] यशसा सꣳसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति ब्राह्मणः प्रियं पशूनां कुर्वधिपतिं प्रजानामिति राजन्यस्तदुपस्पृश्य प्राक् सेक्तवा[6] इत्याह

१ Thus E; स उपस्थाय M; Ma HB, Ed. om. the first præpos.

२ Thus Ma E, Ed.; °स्थायैव यत्र MBH.

३ अथेतरतूष्णी° E; अथेतरंतूष्णी° M.

४ My conjecture; °त्यवनेक्तः M; E omits this passage.

५ °त्या मा आगान्व° or आगन्व° MSS.

My conjecture; सक्तवा E Pś, सेतवा M.

मधुपर्कं प्रोक्तमभिमन्त्रयते स मावतु स मा पातु स मा जुषतामित्युभाभ्याꣳ हस्ताभ्यां प्रतिगृह्णाति ॥ ४३ ॥

आ[1] म अगाद्वर्चसा यशसा सꣳसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति ब्राह्मणः । प्रियं पशूनां कुर्वधिपतिं प्रजानामिति राजन्यस्तस्मिꣳश्चेत्किंचिदापतितꣳ[2] स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्येमां दिशं निरस्यति नेष्टाविद्धं कृन्तामि या ते घोरा तनूस्तया तमाविश यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य समुदायुत्य त्रिः प्राश्नाति प्राण[3] इदं[3] ते बलिꣳ हरामि श्रेष्ठं माधिपतिं कुर्विति । सोमो ऽसि सोमपं मा कुर्विति द्वितीयमन्नमस्यन्नादं मा कुर्विति तृतीयं । त्रिः पीत्वोच्छिष्टं ददाति[4] । यमात्मनः श्रेयाꣳसमिच्छेत्तस्मै शेषं दद्यादुपनीतां[5] गामनुमन्त्रयते[5] जहि मे पाप्मानमुपनेतुश्चेति[6] । तां कुर्वन्ति वोत्सृजन्ति वा । स यदि करिष्यन्भवति कुरुतेत्याहाथ यद्युत्स्रक्ष्यन्भवति तामनुमन्त्रयते गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनाꣳ स्वसादित्यानाममृतस्य नाभिः। प्र णु वोचं चिकितुषे जनाय मा गामनागाम-

१ The mantras are abbreviated in the MSS.

२ °तस्मिꣳस्थित्किं° MSS.

३ प्राणा MSS; probably read प्राणेदं ।

४ om. M.

५ Thus E; °दुपवीतांसोगाम° M.

६ °मुपवेतुस्वेति MSS.

दितिं वधिष्ट ॥ पिबतूदकं तृणान्यत्त्वोमुत्सृजतेत्यथास्मा ओदनमाहारयति । तमश्नाति ब्रह्म त्वाश्नातु ब्रह्म त्वाश्नात्विति । तच्चतुष्टयो ऽर्घो दधि मधु घृतमाप इति । पञ्चतय इत्येके दधि पयो मधु घृतमाप इति । ॥ ४४ ॥ त्रयोदशः ॥

ब्राह्मणो ह सोमार्थः शुक्लेन पिङ्गाक्षेण मूर्धभिन्नेन[१] विस्रवता पथि समाजगाम । तꣳ होवाच कथा[२] विद्यां भगवन्तमिति । सोमो राजास्मीति हैनं प्रत्युवाच । तं मा कदध्वर्युर्नैष्ठ्यनविदभ्यश्रौषीद्यत्रो[३] मा कदध्वर्युर्नैष्ठ्यनविदभिषुणोतीत्यमहं[४] तत्र विस्रवाण्ꣳसावसौ ब्राह्मणो नैष्ठ्यनानि वेद । तं गमिष्यामि । स म[५] इमान्वर्णान्सꣳरोपयिष्यतीति[६] । ते यत्रावभृथमवयन्ति[७] तदौदुम्बर्या शाखया पलाशशाखया वा स्रुवेण वानाज्यलिप्तेन दध्ना पयसा वा मधुमिश्रेण नैष्ठ्यनैर्ऋजीषमभिजुहति । यत्ते ग्राव्णा चिच्छिदुः सोम राजन्नित्येतेनानुवाकेनाभिर्गाभिर्यदतो न ऊनमित्येतया

१ नूर्धभिंनेन M Be ; मूर्धाभिषिक्तेन the other MSS.

२ Thus M ; कथं the other MSS.

३ The reading कदध्व॰ is my conjecture. M reads : ढकडध्व॰, but a horizontal stroke has been put above the ढ, cancelling this akṣara. क्रुडध्व॰ Be 7 ; क्रुद्दध्व॰ the other MSS.—श्यभ्यश्रौषीद् my conjecture ; ॰भ्यश्रौषीद् M, ॰भ्यासोषोद् the other MSS.

४ ढडध्व॰ M ; कडध्व॰ Be 7 ; क्रध्वध्व॰ or क्रुद्दध्व॰ the other MSS.

५ om. M.

६ ब्राह्मणान् i. s. o. वर्णान् M ; ॰रोपयिष्यामीति M.

७ यत्रवावभृथ॰ M.

च चतुर्दशभिर्ऋजीषमभिजुह्वति । ते यथावभृथꣳ सꣳसिध्येयुस्ताꣳब्रूयाद्ये[1] नु राज्ञस्त्वचं भित्त्वा क्रूरं कृत्वेह ग्रावभिः ।॥ ४५ ॥

अशमयित्वा नैष्ठ्यनैर्यन्त्येवैवं[2] कृतागसः ॥ ये सोममसꣳस्थाप्यापः सꣳसाद्य सोमिनः[3] । सꣳस्थितो न इत्यायन्त्यसुरैनान्हिनस्ति सः ॥ असिशूलैस्तुदन्ति यमस्य प्रतिषादने । यो ऽशमयित्वा नैष्ठ्यनैरथ नाकमधिरोहति ॥ वायुर्भूत्वा पवते त्रिदिवं नाकमुत्तमम् । यः शमयित्वा नैष्ठ्यनैरथ नाकमधिरोहति ॥ अध्वर्योर्यजमानस्य प्रतिप्रस्थातुरग्नीधः[4] । ब्रह्मणो होतुरुद्गातु राजैषां लोकमादत्ते न चाहोषुश्चतुर्दश ॥ ये चतुर्दश जुह्वति दध्न[5] एताः स्वाहुतीः । नैषां राजा लोकमादत्ते न प्रजां नोत[6] वाजिनम् ॥ आप्याययन्तो राजानं ग्रावभिः क्रूरमृत्विजः । पयसा शमयन्तो ऽस्य जुह्वतैव चतुर्दशेति । ॥ ४६ ॥ चतुर्दशः ॥

अथ वै भवति ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति । वैमृधः पूर्णमासे ऽनुनिर्वाप्यो

---

१ यो i. s. o. ये M.

२ My conjecture; ॰नैर्यन्त्वेवैवं M; ॰नैस्तान्येवं, जान्येवं, जात्वेवं the other MSS.

३ सौमिनः M.

४ Thus Be 7; ॰स्थातुराग्नीधः D Be; thus also but ॰ध्रः Be; स्थातोंनेताग्नीधः M.

५ दध्न Be 7, दध्ना the other MSS.

६ नोन M; नोद the other MSS.

भवति । तेन पूर्णमासः सेन्द्र । ऐन्द्रं दध्यमावास्यायां । तेनामावास्या सेन्द्रेति । केनो स्विदग्नीजानस्य सेन्द्रौ भवत इत्यैन्द्राग्नेन पुरोडाशेनेत्येव ब्रूयादित्यथ वै भवति देवा वै यज्ञेऽकुर्वत तदसुरा अकुर्वत । ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं । तां पौर्णमासꣳ सꣳस्थाप्यानुनिरवपन्ततो देवा अभवन्परासुरा । यो भ्रातृव्यवान्स्यात्स पौर्णमासꣳ सꣳस्थाप्यैतामिष्टिमनुनिर्वपेत्पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याग्नावैष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्त इति ब्राह्मणꣳ । स एष भ्रातृव्यवतो यथाकामप्रयोगो[1] । मिथुनान्पशून्त्सारस्वताभ्यां । यावदेवास्यास्ति तत्सर्वं वृङ्क्त इति ब्राह्मणमथ वै भवति ॥ ४७ ॥

पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति । स[2] पौर्णमासीं पौर्णमासीमेव यजेत भ्रातृव्यवान्नामवास्याꣳ । हत्वा भ्रातृव्यं नाप्याययतीति ब्राह्मणं । तदेतत्स्तरणावगधं वापरोध्यावगधं[3] वेत्यथ वै भवति साकंप्रस्थायीयेन यजेत पशुकाम इत्येतयेष्ट्वा यक्ष्यमाण उपकल्पयत औदुम्बरं महत्पात्रं प्रभूतमाज्यमित्यथ देवस्य त्वा सवितुः प्रसव इति[4] प्रतिपदं कृत्वाग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालमैन्द्रꣳ

---

१ यथाकामंप्र॰ M.

२ om. M.

३ परोध्यावगधं M, omitting वा ; वापरोध्यावगंधं all the other MSS.

४ इत्येवमेव M.

सांनाय्यं । प्रसिद्धमाग्नेयेन चरित्वाथेतरयोर्हविषोरौदुम्बरे महति पात्रे समवद्यन्नाहेन्द्रायानुब्रूहीति महेन्द्रायेति वा यदि महेन्द्रयाजी भवति । महता पूर्णꣳ होतव्यमित्यत्याक्रम्याश्राव्याहेन्द्रं यजेति महेन्द्रमिति वा यदि महेन्द्रयाजी भवति । वषट्कृते सहैव पात्रेण जुहोति । तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति ब्राह्मणमथ वै भवति दारुपात्रेण जुहोति । न हि मृन्मयमाहुतिमानश । औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव । ऊर्जैवास्मा ऊर्जं पशूनवरुन्द्ध इति ब्राह्मणं । तदेतत्तभ्यावगधं[१] वा निर्वैदावगधं[२] वेत्यथ वै भवति ॥ ४८ ॥

नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति । स[३] यो[३] ऽन्य[३] एतेभ्यो महेन्द्रमियक्ष्येत[४] स संवत्सरमिन्द्रमिष्ट्वाग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ यामावास्यागच्छति तस्यां महेन्द्रं यजते । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव भवत्यथ वै भवति संवत्सरमिन्द्रं यजेत । संवत्सरꣳ हि व्रतं नाति । स्वैवैनं देवतेज्यमाना भूत्या इन्द्धे वसीयान्भवतीति ब्राह्मणमथ वै भवति संवत्सरस्य परस्तादग्नये व्रतपतये

१ Thus M ; ०त्तभ्यावगतो Be ; ०त्तच्छावगतो Be 7 UD ; ०तच्छौवगतो B.

२ Thus M Be U ; ०गंधं B Be 7 D.

३ M समपान्य i. s. o. स यो ऽन्य ।

४ Thus, ०क्ष्येत, all.

पुरोडाशमष्टाकपालं निर्वपेत्संवत्सरमेवैनं वृत्रं जघ्निवाꣳसमग्निर्व्रतपतिर्व्रतमालम्भयति । ततो ऽधि कामं यजेतेति ब्राह्मणमथ वै भवति ॥ ४९ ॥

नासोमयाजी संनयेदनागतं वा एतस्य पयो यो ऽसोमयाजी । यदसोमयाजी संनयेत्परिमोष एव सो ऽनृतं करोत्यथो परैव सिच्यते । सोमयाज्येव संनयेत्पयो वै सोमः पयः सांनाय्यं । पयसैव पय आत्मन्धत्त इति ब्राह्मणमथ वै भवति वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति । त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधꣳश्चरुं । ये ऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति । तस्या एता भवन्त्यग्ने दा दाशुषे रयिं दा नो अग्ने प्रदातारꣳ हवामहे प्रदाता वज्री प्र तत्ते अद्य किमित्ते विष्णो परिचक्ष्यं [1]भूदितीन्वीजानस्यायानीजानस्य[2] । व्यापन्नयैव[3] पूर्वया यजते[3] ऽव्यापन्नयोत्तरया[3] । न द्वे यजेत । यत्पूर्वया संप्रति यजेतोत्तरया छम्बट् कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छम्बट् कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत । एकामेव यजेत

---

१ भूदितौन्वौजान॰ all.

२ Thus MDU Be 7 ; ॰नस्याव्या॰ Be.

३ Thus M ; यजेतव्यापन्नयैवोत्तरया BU ; यजेताव्यापन्नयोत्तरया Be, thus also but यजेते D. The avagraha added by me.

प्रगल्भो ऽस्य जायते । ऽनादृत्य तद्दे एव यजेत । यज्ञमुखमेव पूर्वयालभते । यजत उत्तरया । देवता एव पूर्वयावरुन्द्ध इन्द्रियमुत्तरया । देवलोकमेव पूर्वयाभिजयति मनुष्यलोकमुत्तरया । भूयसो यज्ञक्रतूनुपैतीति ब्राह्मणमथ वै भवत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोके ऽर्धुकं भवतीति ब्राह्मणमथ वै भवति ॥ ५० ॥

दाक्षायणयज्ञेन सुवर्गकामो यजेत । पूर्णमासे संनयेन्मैत्रावरुण्यामिक्षयामावास्यायां यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते ऽहतं वासो । ऽथ पौर्णमास्या उपवसथे ऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथास्यैतदहरिन्द्राय वत्सा अपाकृता भवन्त्यैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वाव्रता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यैन्द्रꣳ सांनाय्यꣳ । सा द्विहविरिष्टिः संतिष्ठते । ऽत्रैतदैन्द्रꣳ सांनाय्यꣳ समुपहूय भक्षयन्त्यथाहतं वासः परिधायापरपक्षं व्रतं चरति । तस्यैतद्व्रतं नानृतं वदति न माꣳसमश्नाति न स्त्रियमुपैति नास्य पल्पूलनेन वासः पल्पूलयन्त्यथ यामावास्यागच्छति[1] तस्या उपवसथे ऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथास्यैतदहर्मित्रावरुणाभ्यां वत्सा अपाकृता भवन्ति । मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वाव्रता तूष्णीं वाथ प्रातराग्नेय-

१ All the MSS. exc. M om. the relative pronoun.

मष्टाकपालं निर्वपति मैत्रावरुणीमामिक्षाꣳ। सा द्विहविरिष्टिः संतिष्ठते। वाजिनस्य काले वाजिनेन चरति। निधत्ते वासो। विसृजते व्रतं। विसृष्टव्रत एतं[1] पूर्वपक्षं भवत्यथ पौर्णमास्यागच्छत्युत्सीदति व्रतपतिर्यदेवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते। तदेतत्संवत्सरावगधꣳ[2] सोमसꣳस्थम्[3]। ॥ ५१ ॥

अथेडादध इत्याचक्षते। समानं वाससश्च व्रतपतेश्च। तथैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यग्नीषोमीयमेकादशकपालमैन्द्रꣳ सांनाय्यꣳ। सा त्रिहविरिष्टिः संतिष्ठते। ऽत्रैतदैन्द्रꣳ सांनाय्यꣳ समुपहूय भक्षयन्ति। तथाहतं वासः परिधायापरपक्षं व्रतं चरत्यागच्छत्यमावास्या। [4]तस्या उपवसथे यजते। तथा मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालं मैत्रावरुणीमामिक्षाꣳ। सा त्रिहविरिष्टिः संतिष्ठते[4]। वाजिनस्य काले वाजिनेन चरति। निधत्ते वासो। विसृजते व्रतं। विसृष्टव्रत एतं[5] पूर्वपक्षं भवत्यथ पौर्णमास्यागच्छत्युत्सीदति

१ एवं M.

२ Thus M; ०रावगंधं Be; ०राववाध्ये Be 7 BDU.

३ ०सꣳस्था M.

४...४ Thus M only; the other MSS. are partly defective, partly corrupt.

५ एवं M.

व्रतपतिर्यद्देवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते । तदेतत्संवत्सरावगधꣳ[1] सोमसꣳस्थम्[2] । ॥ ५२ ॥

अथ चतुश्चक्रो भ्रातृव्यवतो यज्ञः । समानं वाससश्चैव व्रतपतेश्च । तथैवैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपति सरस्वत उपाꣳशुयाजमग्नीषोमीयमेकादशकपालमैन्द्रꣳ सांनाय्यꣳ । सा चतुर्हविरिष्टिः संतिष्ठते । ऽथैतदैन्द्रꣳ सांनाय्यꣳ समुपहूय भक्षयन्ति । तथैवाहतं वासः परिधायापरपक्षं व्रतं चरत्यागच्छत्यमावास्या । नैवोपवसथे यजते । तथैव मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपति सरस्वत्या उपाꣳशुयाजमैन्द्रमेकादशकपालं मैत्रावरुणीमामिक्षाꣳ । सा चतुर्हविरिष्टिः संतिष्ठते । वाजिनस्य काले वाजिनेन चरति । निधत्ते वासो । विसृजते व्रतं । विसृष्टव्रत एतं[3] पूर्वपक्षं भवत्यथ पौर्णमास्यागच्छत्युत्सीदति व्रतपतिर्यद्देवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते । तदेतत्संवत्सरावगधꣳ[1] सोमसꣳस्थम्[2] । ॥ ५३ ॥

स एष चतुश्चक्रो भ्रातृव्यवतो यज्ञः । स यथा ह वा इदमनश्चतुश्चक्रं व्यवस्थानमेत्येवꣳ[4] ह वा एष एतेन यज्ञक्रतु-

---

१ Thus M ; ०संवत्सरावगंधं Be ; ०संवत्सरावराध्यं the other MSS.

२ ०संꣳस्था M.

३ एवं M.

४ Thus M ; व्यवस्थानं एत्ये० Be BU ; व्यवस्थान एत्ये० Be 7 D.

नेष्ट्वा पाप्मानं भ्रातृव्यं व्यवघ्नान एति । स एष वसिष्ठयज्ञः केशियज्ञः सार्वसेनियज्ञो । वसिष्ठो ह यत्र सौदासानभिचचारैवꣳ हैनानभिचचार । केशी ह यत्र खाण्डिकमभिचचारैवꣳ हैनमभिचचार । सार्वसेनिर्ह यत्र भ्रातृव्यानभिचचारैवꣳ हैनानभिचचार । ॥ ५४ ॥ पञ्चदशः ॥

चातुर्मास्यैः सोमैर्यक्ष्यमाणो भवति । स द्वयान्संभारानुपकल्पयत आग्निष्टोमिकाꣳश्च वैश्वदेवसंभाराꣳश्च[1] । स[2] पुरस्तात्फाल्गुन्यै[2] वा चैत्र्यै वा पौर्णमास्या आमावास्येन हविषेष्ट्वा दीक्षते । तस्यापरिमिता[3] दीक्षास्तिस्र उपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञिये[4] ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति । वैश्वदेवं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिह्योपवसन्त्यथ प्रातस्त्रिवृद्बर्हिस्तदेकवदेव[5] स्तृणात्यथाग्नेयं पशुमुपाकरोति । तस्य वैश्वदेव उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते वैश्वदेवहवीꣳषि । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरे-

---

१ Thus MD Be 7; वैश्वदेविकसंभा° Be BU.

२ Thus M; स om. B Be; पुरस्तात् om. B Be 7 DU.

३ Thus M Be 7; तस्या अपरि° Be BUD.

४ Thus MDU; यज्ञीये the other MSS.

५ भवति Be BU ins. after बर्हिस् ।

षाꣳ हविषामृजुधा त्रिवृदग्निष्टोमः संतिष्ठते । पुरस्ताद्वानासोमानां वाजिनेन चरति । समानं कर्मावभृथात्समिष्टो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै द्यावापृथिव्योपालम्भ्या भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतदथातश्चतुर्षु मासेषु ॥ ५५ ॥

वरुणप्रघासाभ्याꣳ सोमाभ्यां यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञिये[1] ऽहन्द्वितीयमहः संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहर्मरुद्भ्यो वत्सा अपाकृता भवन्ति । मारुतं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य मारुत उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते सप्त वरुणप्रघासहवीꣳषि । स यत्र प्रातःसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीयाः । अनुब्रूहि यजेतीतरेषाꣳ हविषामृजुधा पञ्चदश उक्थ्यः संतिष्ठते । ऽहीनसंततिं करो-

---

१ Thus MDU ; यज्ञीये the other MSS.

त्र्यथास्यैतदहर्वरुणाय वत्सा अपाकृता भवन्ति । वारुणं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य वारुण उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तते वारुणी च कायश्च[1] । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरयोर्हविषोर्ऋजुधा सप्तदश उक्थ्यः संतिष्ठते । पुरस्ताद्धानासोमानां वाजिनाभ्यां चरति । समानं कर्मावभृथादेतस्मिन्नवभृथ उपाददते वारुण्ये निष्कासं तुषानिति । वारुणस्य वारुण्यामिचाभ्यवदानीया भवत्यृजीषेण सह तुषान्संप्रकिरन्ति । प्रसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै कायोपालम्भ्या[2] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतद्यातश्चतुर्षु मासेषु ॥ ५६ ॥

साकमेधैः सोमैर्यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञिये ऽहन्सुत्यमहः संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति ।

१ काया च M.

२ Thus M Be 7 ; काय उपालंभ्यो or कायोपालंभ्यो the other MSS.

तस्यानीकवत उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तत आनीकवतः । प्रैषवन्तः सवनीया । अनुब्रूहि यजेत्यानीकवतस्य । माध्यंदिनीयाननुवर्तते सांतपनः । प्रैषवन्तः सवनीया । अनुब्रूहि यजेति सांतपनस्यर्जुधैकविꣳश उक्थ्यः संतिष्ठते । ऽहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिह्योपवसन्त्यथ सायं गृहमेधीयेन चरत्यथापररात्रे पूर्णदर्व्येण[१] चरत्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य क्रैडिन उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तते क्रैडिनः । प्रैषवन्तः सवनीया । अनुब्रूहि यजेति क्रैडिनस्यर्जुधा त्रिणव उक्थ्यः संतिष्ठते । ऽहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिह्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते महाहवींꣳषि । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषाꣳ हविषां । तृतीयसवनीयाननुवर्तन्ते महापितृयज्ञहवींꣳषि । स यत्र तृतीयसवने धिष्ण्यान्विहरति तदजस्रं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये महापितृयज्ञहवींꣳषि श्रपयित्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषाꣳ हविषामृजुधा त्रयस्त्रिꣳश उक्थ्यः संतिष्ठते । पुरस्ताद्धानासोमानां त्रैयम्बकैश्चरति । समानं कर्मावभृथात्प्रसिद्धो ऽवभृथ । उदय-

---

१ Thus Be U ; ०दर्व्येण M Be 7 D.

नीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै वैश्वकर्मण्युपालम्भ्या[१] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति । तावनुवर्तेत आदित्यः । प्रैषवन्तौ पशुपुरोडाशावनुब्रूहि यजेत्यादित्यस्य । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वेत्युत्क्रमेतदथातश्चतुर्षु मासेषु ॥ ५७ ॥

शुनासीरीयेण सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षास्तिस्र उपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाꣳसि विगृह्योपवसन्त्यथास्यैताꣳ रात्रिं वायवे वत्सा अपाकृता भवन्ति । प्रातर्वायव्यं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथाग्नेयं पशुमुपाकरोति । तस्यैन्द्र ऋषभ उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते शुनासीरीयहवीꣳषि । प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाꣳ हविषामृजुधा ज्योतिरग्निष्टोमः संतिष्ठते । समानं कर्मावभृथात्प्रसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै[२] सौर्युपालम्भ्या[३] भवति । तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ

---

१ Thus Be 7; ०कर्मण्योपा० Be; ०कर्मण उपालंभ्यो M.

२ तस्यै MU Be; तस्याः Be 7 D; B om.

३ Thus Be 7; सौर्योपालंभ्या M; सौर्य उपालंभ्यो Be U.

निर्वपति । संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतत् । ॥ ५८ ॥ षोडशः ॥

अथातो ज्योतिरयनमित्याचक्षते । वैश्वदेवेन सोमेन यक्ष्यमाणो भवतीति समानी प्रतिपदेतावदेव नाना । त्रिवृदसुत्राग्निष्टोमो । ज्योतिरित्या।थातश्चतुर्षु मासेषु वरुणप्रघासेन सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्य।थास्यैतदहर्दया वत्सा अपाकृता भवन्ति मरुद्भ्यो वरुणायेति । इयं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वा।थ वसतीवरीः परिहृत्य पयाꣳसि विभिद्योपवसन्त्य।थ प्रातराग्नेयं पशुमुपाकरोति । तस्य मारुतो वारुण इत्युपालम्भ्यौ भवतस्त।स्य प्रातःसवनीयाननुवर्तन्ते सप्त वरुणप्रघासहवीꣳषि । स यत्र प्रातःसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषाꣳ हविषां । माध्यंदिनीयाननुवर्तते[1] वारुणी च कायस्य । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरयोर्हविषो।र्ऋजुधा ज्योतिरुक्थ्यः संतिष्ठते । समानमुत्तरं कर्म यथा द्विरात्रे तथा।यातश्चतुर्षु मासेषु ॥ ५९ ॥

---

1 Thus MDU; °वर्तंते the other MSS.

साकमेधेन सोमेन यक्ष्यमाणो भवति। दीक्षते। तस्यापरिमिता दीक्षाः षडुपसदः। स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति। तस्य तथा संपद्यते। प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाꣳसि विग्रिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति। तस्यानीकवतः क्रैडिनः प्राजापत्यस्तूपर इत्युपालम्भ्या भवन्ति। तस्य प्रातःसवनीयाननुवर्तत आनीकवतः। प्रैषवन्तः सवनीया। अनुब्रूहि यजेत्यानीकवतस्य। माध्यंदिनीयाननुवर्तते सांतपनः। प्रैषवन्तः सवनीया। अनुब्रूहि यजेति सांतपनस्य। तृतीयसवनीयाननुवर्तन्ते[१] गृहमेधीयप्रभृतीनि महाहवीꣳषि। स यत्र तृतीयसवने धिष्ण्यान्विहरति तदजस्रं मार्जालीयं करोति। महाहविर्भिश्चरित्वा गार्हपत्ये महापितृयज्ञहवीꣳषि श्रपयित्वा तैर्मार्जालीये प्रचरति[२]। प्रैषवन्तः सवनीया। अनुब्रूहि यजेतीतरेषाꣳ हविषामृजुधा ज्योतिरुक्थ्यः संतिष्ठते। समानमुत्तरं कर्म यथा त्रिरात्रे तथा। स उवेव[३] शुनासीरीयः॥ ६०॥ सप्तदशः॥

अथातो महायज्ञ[४] इत्याचक्षते। ज्योतिरतिरात्र इत्येक आहुर्दीक्षते। तस्यापरिमिता दीक्षा द्वादशोपसदः। स तथा

---

१ Thus MD; ॰वर्तते the other MSS.

२ ॰रन्ति Be Be 7 DU.

३ Thus M; उवेदोन Be 7; उक्थ्येन Be BDU.

४ Thus M Be BU Keś.; महापितृयज्ञ Be 7 D.

राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहस्त्रया वत्सा अपाकृता भवन्ति विश्वेभ्यो देवेभ्यो मरुद्भ्यो वरुणायेति । त्रयं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विमिथ्योपवसन्त्यथ [1]प्रातस्त्रिवृद्बर्हिरेकवदेव[2] स्तृणात्यथाग्नेयं पशुमुपाकरोति । तस्य वैश्वदेवो मारुतो वारुण आनीकवतः क्रैडिनः प्राजापत्यस्तूपर ऐन्द्र ऋषभ इत्युपालम्भ्या भवन्ति । तस्य प्रातःसवनीयाननुवर्तन्ते वैश्वदेवहवीꣳषि । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषाꣳ हविषां । माध्यंदिनीयाननुवर्तन्ते सर्वाणि वरुणप्रघासहवीꣳषि । ॥ ६१ ॥

स यत्र माध्यंदिनीये सवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषाꣳ हविषां । तृतीयसवनीयाननुवर्तन्त आनीकवतप्रभृतीनि महाहवीꣳषि । स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति ।

---

१ Between प्रातस् and त्रिवृद् Be 7 has the following words: (प्रात)-राग्नेयं पशुमुपाकरोति तस्यानीकवतः क्रैडिनः प्राजापत्यस्तूपर इत्युपालंभ्या भवंति तस्य प्रातःसवनीयाननुवर्तंत आनीकवतः प्रैषवंतः सवनीया अनुब्रूहि यजेत्यानीकवत-( स्त्रिवृद् ) ।

२ Thus ( एकवदेव ) M Be 7 ; एकधैव Be U ; एकवैव B ; D om.

महाहविर्भिश्चरित्वा गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रचरति । प्रैषवन्तः सवनीया । अनुब्रूहि यजेतीतरेषाꣳ हविषामृजुधा ज्योतिरतिरात्रः संतिष्ठते । पुरस्ताद्धानासोमानां वाजिनैश्चरित्वा त्रैयम्बकैश्चरति[1] । समानं कर्मावभृथाद्यैतस्मिन्नवभृथ उपाददते वारुण्ये निष्कासं तुषानिति । वारुणस्य वारुण्यामिक्षाभ्यवदानीया भवत्यृजीषेण सह तुषान्त्संप्रकिरन्ति[2] । प्रसिद्धो ऽवभृथ । उदयनीययेष्ट्वा मैत्रावरुणीं वशामुपाकरोति । तस्यै द्यावापृथिव्या काया वैश्वकर्मणी सौरीत्युपालम्भ्या भवन्ति । तासां प्रसिद्धं वपाभिश्चरित्वा पशुपुरोडाशान्निर्वपति । ताननुवर्तन्त आदित्यप्रभृतीनि शुनासीरीयहवींषि । प्रैषवन्तः पशुपुरोडाशा । अनुब्रूहि यजेतीतरेषाꣳ हविषाꣳ । संतिष्ठते यथा पञ्चपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते पुरस्तादेवाग्रे ऽथ दक्षिणतो ऽथ पश्चादथोत्तरतो ऽथोपरिष्टात्संतिष्ठन्ते चातुर्मास्याः सोमाः संतिष्ठन्ते चातुर्मास्याः सोमाः । ॥ ६२ ॥ अष्टादशः ॥

॥ इति सप्तदशः प्रश्नः[3] ॥

१ त्र्यंबकै॰ MSS.

२ ॰किरति M.

३ अथ ( r. इति ) बौधायन उत्तरतन्त्रसूत्रे प्रथमः प्रश्नः U.

बृहस्पतिसवेन यक्ष्यमाणो भवति । स उपकल्पयते ऽश्व-चतुस्त्रिꣳशा दक्षिणाः कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रमाज्यमभिषेचनार्थाथ वै ब्राह्मणं भवति परिस्रजी होता भवत्यरुणो मिर्मिरस्त्रिशुक्र इत्येष ह वै परिस्रजी यः खलतिः परिकेश्यो[१] । ऽथ[१] हैष मिर्मिरो यः शुक्लो विक्लिध-स्तिलकवान्पिङ्गाक्षो[२] । ऽथ हैष त्रिशुक्रो यस्त्रिवेदो[३] । दीक्षते । तस्यैकरात्रीणस्य सोमं क्रीणन्ति । तिस्र उपसदस्तायते त्रिवृदग्निष्टोमो रथंतरसामा प्रवर्ग्यवान्गायत्रीष्वेक स्तोमः । प्रज्ञातं देवसुवाꣳ हविषां करणं । तस्य बार्हस्पत्यो[४] ऽतिग्राह्यो[४] । बार्हस्पत्यः पशुरुपालभ्यः । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोप-स्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्र आज्यमानीयाभिषिञ्चति बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् । सप्तास्यस्तु-विजातो रवेण वि सप्तरश्मिरधमत्तमाꣳसि ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण बृहस्पतिसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रो-शन्तीति[५] समानमा मुखस्य विमार्जनात् । ॥ १ ॥

१ Thus MB Be; परिकेश्यथ the other MSS.

२ Thus D; तिलकावा° M Be 7 U; तीलकवा° Be; तीलकावा° B.

३ Thus M; त्रिवेदी the other MSS.

४ Thus M Be 7 D; °पत्यसातिग्रा° Be BU.

५ M reads: समुत्क्रोशंत्यभ्यषेच्यतायमसौ + बृहस्पतिसवेनेति ।

तस्य प्रातःसवने सन्नेषु नाराशꣳसेष्वेकादश दक्षिणा नीयन्त। एकादश माध्यंदिने सवने सन्नेषु नाराशꣳसेष्वश्वद्वादशास्तृतीयसवने सन्नेषु नाराशꣳसेषु। माध्यंदिन एव सवने ऽश्वं दद्यादिति ह स्माह मौद्गल्यः। स वा एष[१] नैमार्जनो[१] यज्ञः। स यथा ह वा इयं गैरेयी[२] नदी[३] निमृजत्येवꣳ[३] ह वा एष एतेन यज्ञक्रतुनेष्ट्वा पाप्मानं भ्रातृव्यं निमृजन्नेति[४]। स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत पुरा श्रेषाच्छान्त्यै। राजा राजसूयेनेजान इच्छति बृहस्पतिसवेनाभिषिच्येयेति[५]। तदु वा आहुर्न वै राजसूयाभिषिक्तो ऽन्येन यज्ञक्रतुनाभिषिच्येताप्रत्यवरोही ह[६] भवतीत्युभाभ्यां ब्रह्मक्षत्राभ्यामभिषिच्या[७] इत्यभिषिच्येतैवेति[७]। दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसदः। समानमाभिषेकस्य कालादभिषेकस्य काले माध्यंदिनीया एवैनं चमसा निमृजन्तो यन्ति। चतुर्विꣳश एष भवति।

---

१ Thus M Be 7 D; एषसवनैमार्जनो BU; एष सवोघनिर्माजनो Be.

२ Thus M; गौरेयी the other MSS. (U गौरेयीर्)।

३ नदी निमृजंत्येवꣳ M; नदीनिर्मृज्येत्येवꣳ B; नदीर्निर्मृज्यनेत्येवꣳ Be 7 D; नदीर्निर्मृज्यंत्येवं U; नदीं तीत्वा पांसून्निर्मृजंत्येवꣳ Be. Read perhaps: नदी निमृजन्त्येत्येवꣳ *i.e.* निमृजन्ती एति, *cp. infra* निमृजन्नेति।

४ निमृज्यन्नेति Be 7.

५ Thus MD Be 7; ॰भिषिच्यनेति Be U; ॰भिषिच्येतेति B.

६ om. M.

७ Thus M only; ॰भिषिच्यात इत्यभिषिच्येतैवेति U Be 7 D; ॰भिषिच्यात इत्यभिषिच्येवेति B; ॰भिषिच्याभिषिच्येतेनैवेति Be.

राजा राजसूयेन यक्ष्यमाण आध्यायति[1] त्रिषु वर्णेष्वभिषिक्तेष्वभिषिच्येय[2] पुरोहिते स्थपतौ सूत इति। पुरोहितो दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसदः। समानमाभिषेकस्य कालादभिषेकस्य काले शुक्रामन्थिनोः सꣳस्रावेणाभिषिञ्चति। चतुष्टोम एष भवति। ॥ २ ॥

स्थपति[3] स्थपतिसवेन यक्ष्यमाणो भवति स उपकल्पयत आर्षभं चर्म सुवर्णरजतौ च रुक्मावौदुम्बरं पात्रं दध्यभिषेचनाय। दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसद। आग्नेयस्य मारुती पृश्निः पष्ठौह्युपालम्भ्या भवति। सप्त हवीꣳषि प्रातःसवनीयाननुवर्तन्ते यदाग्नेयो भवत्यग्निमुखाह्यृद्धिरित्येतानि। समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतन आर्षभं चर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यौदुम्बरे पात्रे दध्यानीयाभिषिञ्चति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण स्थपतिसवेनाभिषिञ्चामीति। समुन्मृष्टे समुत्क्रोशन्तीति समानमा सुखस्य विमार्जनात्स एष स्थपतिसवः सप्तदशो ऽग्निष्टोम। एष एव स्थपतिसव। एष वैश्यसव[4]। एष माससवो। मासा ह्येनेनातः[5] पूर्वमीजिरे। ॥ ३ ॥

---

१ ॰ध्यायतीति M.
२ Thus MD Be 7; ॰षिच्येषु Be BU.
३ om. Be BU.
४ वैश्यस्य सव Be 7.
५ *i. s. o.* अतः Be 7 अत, D अतं।

सूतः[1] सूतसवेन यक्ष्यमाणो भवति स उपकल्पयते कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रꣳ हिरण्यं घृतमभिषेचनाय। दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसदो। ऽष्टौ हवीꣳषि प्रातःसवनीयाननुवर्तन्ते यदाग्नेयो भवत्याग्नेयो वै ब्राह्मण इत्येतानि। समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे घृतमानीय हिरण्येनोत्पूयाभिषिञ्चति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण सूतसवेनाभिषिञ्चामीति। समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात्स एष सूतसवः सप्तदशो ऽग्निष्टोम। एष एव सूतसव। एष ग्रामणीसव[2]। एष स्थतुसव। स्थतवो ह्येनेनातः पूर्वमीजिरे। ॥ ४ ॥ प्रथमः ॥

सोमसवेन यक्ष्यमाणो भवति स उपकल्पयते सौमीꣳ सूतवशां कृष्णाजिनꣳ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रं पयो ऽभिषेचनायाथ वै ब्राह्मणं भवति यत्किंच राजसूयमृते सोमं तत्सर्वं भवतीति। स आमावास्येन हविषेष्ट्वाष्टावहान्यानुमतप्रभृतिभिरेति संवत्सरं चातुर्मास्यैः सप्तेन्द्रतुरीयप्रभृतिभिरथ रत्निनाꣳ हविर्भिर्यजते। ऽथ देवसुवाꣳ हविर्भिर्यजते।

१ om. M.

२ ग्रामणि॰ M Be.

ऽथैताꣳ सौमीꣳ सूतवशामालभते[१] । तस्या असमुदिते यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे पय आनीयाभिषिञ्चत्यषाढं[२] युत्सु पृतनासु पप्रिꣳ सुवर्षामप्स्वां वृजनस्य गोपाम्। भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनु मदेम सोम॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण सोमसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनाद् । अथ सꣳसृपाꣳ हविर्भिर्यजते । ऽथ पञ्चहविषा दिशामवेष्ट्या यजते । ऽथ द्विपशुना पशुबन्धेन यजते । ऽथ सात्यदूतानाꣳ हविर्भिर्यजते । ऽथ पूर्वैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते सोमसवो ऽर्धचतुर्थैर्मासैः । ॥ ५ ॥

पृथिसवेन[३] यक्ष्यमाणो भवति स उपकल्पयते रोहितं चर्मानडुहꣳ सुवर्णरजतौ च रुक्मावौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृता[४] । अथ वै ब्राह्मणं भवति

---

१ ०भते MD Be UB; ०भेत Be 7.

२ The mantra is abbreviated in all the MSS.

३ पृथिवि० M, पृथिवी Be every time in this kh.

४ Thus M Be; समाभृता the other MSS.

यत्किंच राजसूयमनुत्तरवेदीकं तत्सर्वं भवतीति । स आमावास्येन हविषेष्ट्वाष्टावहान्यानुमतप्रभृतिभिरेति सप्तेन्द्रतुरीयप्रभृतिभिरथ रत्निनाꣳ हविर्भिर्यजते । ऽथ देवसुवाꣳ हविर्भिर्यजते । ऽथैतां चतुर्हविषमिष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुमिति । तस्या[1] असमुदिते[1] यजमानायतने रोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यौदुम्बरे द्रोणे चतुष्टयीरपः समवनीयाभिषिञ्चति[2] ये मे पञ्चाशतं ददुरश्वानाꣳ सधस्तुतिः । द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणाम् ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण पृथिसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनादथ सꣳसृपाꣳ हविर्भिर्यजते । ऽथ पञ्चहविषा दिशामवेष्ट्या यजते । ऽथोपातीत्य द्विपशुं पशुबन्धꣳ सात्यदूतानाꣳ हविर्भिर्यजते । ऽथ पूर्वैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाꣳ हविर्भिर्यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते पृथिसवो ऽध्यर्धेन[3] मासेन[3] । ॥ ६ ॥

---

१ Thus M Be 7 DUB; तस्यासमु॰ Be.

२ Thus Be 7 DU; समानीय M Be B, but cp. XII. 8 (p. 98, 5).

३ Thus M; ध्यर्ध(र्धं)मासेन the other MSS.

गोसवेन यक्ष्यमाणो भवति स उपकल्पयते ऽयुतं दक्षिणाः सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रं प्रतिधुगभिषेचनाय[१] । दीक्षते । तस्य षड् दीक्षाः षडुपसदः । समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनमात्रं वेदेरनुद्धतं भवति । तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे प्रतिधुगानीय[२] बृहत स्तोत्रं प्रत्यभिषिञ्चति रेवज्जातः सहसा वृद्धः क्षत्राणां क्षत्रभृत्तमो वयोधाः। महान्महित्वे तस्तभानः क्षत्रे राष्ट्रे च जागृहि। प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामि॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण गोसवेनाभिषिञ्चामीति । समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात् । एष गोसवः षट्त्रिꣳशः सर्व उक्थ्य उभयसामायुतदक्षिणः[३] । पवमाने कण्वरथंतरं कुर्वन्ति[४] । ॥ ७ ॥ द्वितीयः ॥

ओदनसवेन यक्ष्यमाणो भवति स उपकल्पयते रोहितं चर्मानडुहꣳ सुवर्णरजतौ च रुक्मौ शतमानं च प्रवर्तं चतुरो वर्णान्ब्राह्मणꣳ राजन्यं वैश्यꣳ शूद्रं चतुरो रसान्मधु सुरां

---

१ Thus M Be 7 D; प्रतियुग॰ the other MSS.

२ Thus M; प्रतिधुषमानीय all the other MSS., but cp. Maitr. S. II. 2. 7, where the word is also used as a neuter (sc. पयः).

३ Thus Be 7 D; ॰सामायुतंदक्षिणाः M; ॰सामाप्ययुतदक्षिणः the other MSS.

४ Thus M; भवति the other MSS.

पय अपस्त्वारि[1] पात्राणि सौवर्णꣳ राजतं काꣳस्यं मृन्मयं चतस्रो दक्षिणाः शतमानꣳ हिरण्यं तिस्रधन्वमश्वां माषैः पूर्णं कमण्डलुं चतुष्टयीः शलाकाः पर्णमय्यौ नैयग्रोध्यावाश्वत्थ्यौ फाल्गुनपाच्यौ[2] चत्वारि नानावृक्ष्याणि पात्राणि सक्तूꣳस्त्रीणि दर्भपुञ्जीलान्यौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृताः शतं[3] च[3] रथं चैतेनोपक्लृप्तेन रोहिणीमायतीमुपरमत्यथ[4] रोहिण्येति पूर्वाग्निमन्ववस्यत्युत्तपनीयꣳ[5] शालीनो ऽन्वाहार्यपचनमाहिताग्निरथाध्वर्युरपरराच आहृत्य सꣳशास्त्येकौदनꣳ[6] अपयतेति । तं तथा अपयन्ति यथा पुरादित्यस्योदयाच्छृतो[7] भवत्युद्यता सूर्येण कार्य इति ब्राह्मणमथैतमोदनꣳ अपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंभिन्दन्निवोद्धरति । सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथैताꣳश्चतुरो वर्णान्दक्षिणत उदङ्मुखानुपवेशयत्यथान्वारब्धे यजमाने जुहोति सिꣳहे व्याघ्र उत या

1 स्वाप॰ all.

2 Thus M; फाल्गुनपाच्यौ Be B; फाल्गुनपाचौ DU; फाल्गुन्यौ पाचीं Be.

3 Uncertain; शतं च M; सतं च Be 7 D; श्वं च BU; सितं (omitting च) Be.

4 Read perhaps अद्य i.s.o. अथ, cp. XIII. 36 (p. 145, 3), XV. 2 (p. 205, 10) and XVIII. 16.

5 ॰न्ववस्यत्य॰ M Be 7; ॰न्वस्यत्यु॰ Be BUD.

6 Thus Be BU; एक्योदनꣳ M; स्रोदनं Be BU.

7 Thus M Be 7 D; पुरस्तादादित्य॰ Be BU.

पृदाकाविति चतस्रः स्रुवाहुतीर्हुत्वाहुत्वैव सꣳस्रावैः प्रवर्तमभिघारयति राडसि विराडसि सम्राडसि स्वराडसीत्यथैतं[१] प्रवर्तमग्रेणाहवनीयं[२] पर्याहृत्य दक्षिणतो निदधाति ॥ ८ ॥

अथैतत्सौवर्णं पात्रं याचति तस्मिꣳस्तिरः पवित्रं मध्वानीय सक्तूनोप्य पर्णमयीभ्याꣳ शलाकाभ्यामुपमन्थतीन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामीति तेजो ऽसीति ब्राह्मणाय प्रयच्छति तत्ते प्रयच्छामीति ब्राह्मणः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्टे तेजस्वदस्तु मे मुखं तेजस्वच्छिरो अस्तु मे। तेजस्वान्विश्वतः प्रत्यङ् तेजसा संपिपृग्धि मेति त्रिराचम्य प्रशꣳसति तस्मा एतच्चैव पात्रं ददाति शतमानं च हिरण्यमथैतद्राजतं पात्रं याचति तस्मिꣳस्तिरः पवित्रꣳ सुरामानीय सक्तूनोप्य नैयग्रोधीभ्याꣳ शलाकाभ्यामुपमन्थतीन्द्राय त्वौजस्वत ओजस्वन्तꣳ श्रीणामीत्योजो ऽसीति राजन्याय प्रयच्छति तत्ते प्रयच्छामीति राजन्यः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्ट ओजस्वदस्तु मे मुखमोजस्वच्छिरो अस्तु मे। ओजस्वान्विश्वतः प्रत्यङ्ङोजसा संपिपृग्धि मेति त्रिराचम्य प्रशꣳसति तस्मा एतच्चैव पात्रं ददाति तिसृधन्वं चाथैतत्कांस्यं पात्रं याचति तस्मिꣳस्तिरः पवित्रं पय आनीय सक्तूनोप्याश्वत्थीभ्याꣳ शलाकाभ्यामुपमन्थतीन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामीति पयो ऽसीति वैश्याय

१ °थैनं all exc. M.

२ °मेणाग्निं M.

प्रयच्छति । तत्ते प्रयच्छामीति वैश्यः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्टे पयस्वदस्तु मे मुखं पयस्वच्छिरो अस्तु मे । पयस्वान्विश्वतः प्रत्यङ् पयसा संपिपृग्धि मेति । त्रिराचम्य प्रशꣳसति । तस्मा एतच्चैव पात्रं ददात्यश्नां चाथैतन्मृन्मयं पात्रं याचति । तस्मिꣳस्तिरः पवित्रमप आनीय सक्तूनोप्य फाल्गुनपात्रीभ्याꣳ[1] शलाकाभ्यामुपमन्थतीन्द्राय त्वायुष्मत आयुष्मन्तꣳ श्रीणामीत्यायुरसीति शूद्राय प्रयच्छति । तत्ते प्रयच्छामीति शूद्रः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्ट आयुष्मदस्तु मे मुखमायुष्मच्छिरो अस्तु मे । आयुष्मान्विश्वतः प्रत्यङ्ङायुषा संपिपृग्धि मेति । त्रिराचम्य प्रशꣳसति । तस्मा एतच्चैव पात्रं ददाति माषैश्च पूर्णं कमण्डलुमथैतमोदनमभ्युत्सृप्य प्राश्नाति । तस्य यन्न सहते तदप्सु प्रवेशयत्यथ हिरण्याहृतं निष्ठिवति । निष्ठिवन्तमनुमन्त्रयत इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण सोम राजन् । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासदित्यथैतं प्रवर्तमद्भिः प्रक्षाल्य दक्षिणे कर्ण आबध्नीत आयुष्टे विश्वतो दधदित्यथैनमनुपरिवर्तयत[2] आयुरसि विश्वायुरसि सर्वायुरसि सर्वमायुरसीत्यथैनं त्रिभिर्दर्भपुञ्जीलैः पवयति यतो वातो मनोजवा यतः क्षरन्ति सिन्धवः । तासां त्वा सर्वासाꣳ

१ फल्गुनपाचिभ्यां M; फाल्गुनपात्रीभ्याꣳ Be 7 BUD; फल्गुनीभ्याꣳ Be.

२ Thus M; एतं i.s.o. एनं the other MSS.

हस्ताभिषिञ्चामि वर्चसेत्यथास्य दक्षिणमक्षिकटं[1] न्यक्षति[1] समुद्र इवासि गह्मना सोम इवास्यदाभ्यः। अग्निरिव विश्वतः प्रत्यङ् सूर्य इव ज्योतिषा विभूरिति ॥ ९ ॥

यावदेवात्राध्वर्युस्तिष्ठति तावदेष प्रतिप्रस्थातौदुम्बरे द्रोणे चतुष्टयीरपः समवनीय चतुरो ग्रहान्गृह्णात्यपां यो द्रवणे रसस्तमहममुष्मा आमुष्यायणाय तेजसे ब्रह्मवर्चसाय गृह्णामीति पर्णमयेनापां य ऊर्मौ रसस्तमहममुष्मा आमुष्यायणायौजसे वीर्याय गृह्णामीति नैयग्रोधेनापां यो मध्यतो रसस्तमहममुष्मा आमुष्यायणाय पुष्ट्यै प्रजननाय गृह्णामीत्याश्वत्थेनापां यो यज्ञियो रसस्तमहममुष्मा आमुष्यायणायायुषे दीर्घायुत्वाय गृह्णामीत्यौदुम्बरेणाथैतद्रोहितं चर्मानडुहं[2] प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्यां रुक्माभ्यां पर्युपास्याभिषिञ्चत्यपां यो द्रवणे रसस्तेनाहमिममामुष्यायणं तेजसे[3] ब्रह्मवर्चसायाभिषिञ्चामीति पर्णमयेनापां य ऊर्मौ रसस्तेनाहमिममामुष्यायणमोजसे वीर्यायाभिषिञ्चामीति नैयग्रोधेनापां यो मध्यतो रसस्तेनाहमिममामुष्यायणं पुष्ट्यै प्रजननायाभिषिञ्चामीत्याश्वत्थेनापां यो

१ Thus Be; दक्षिणमक्षिकटन्याक्षति M; दक्षिणे अक्षिकटे न्यक्षति BU; दक्षिणे अक्षिकोटं न्यक्षति Be 7 D.

२ All MSS. exc. M ins. जघनेनाग्निं।

३ In Be here and infra all the Datives (°वर्चसाय, ओजसे, वीर्याय etc.) are changed into Instrumentals; M has everywhere Instrum.

यज्ञियो रसस्तेनाहमिममामुष्यायणमायुषे दीर्घायुत्वायाभिषिञ्चामीत्यौदुम्बरेण। समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनादुत्तरत एतद्रूपायितꣳ शतं[1] तिष्ठति रथश्च[1]। तदभिप्रैत्यभिप्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा। आतिष्ठ मित्रवर्धनस्तुभ्यं देवा अधिब्रुवन्नित्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं याविति। रथमातिष्ठत्यातिष्ठ वृत्रहन्निति प्रतिपद्यायं पृणक्तु रजसी उपस्थमित्यातो ऽथैतच्छतं[2] त्रिः प्रदक्षिणं परियाय[3] पुरस्तात्प्रत्यायाति। तदध्वर्यवे ददाति। स एष ओदनसवो राज्ञो वा ब्राह्मणस्य वा वैश्यस्य वा पुष्टिकामस्य यज्ञः। ॥ १० ॥ तृतीयः ॥

पञ्चशारदीयेन यक्ष्यमाणो भवति। स उपकल्पयते सप्तदश निरष्टान्वत्सतरानेकहायनान्स्स पुरस्तान्मार्गशीर्ष्यै[4] पौर्णमास्या आमावास्येन हविषेष्ट्वा सप्तदश मारुतीः पृश्नीर्वत्सतरीरालभते। ऽभिप्रोक्षणतो वत्सतरान्स्नापयित्वोत्सृजन्त्यथेतराभिः सꣳस्थां कुर्वन्ति। संवत्सरे पर्यवेते मरुद्भ्यः सांतपनेभ्यः सप्तदश पृषतीर्वत्सतरीरालभते। ऽभिप्रोक्षणतो वत्सतरान्स्नापयित्वोत्सृजन्त्यथेतराभिरेव सꣳस्थां कुर्वन्ति। द्वितीये संवत्सरे

१ Uncertain again, cp. p. 350, 6.; सतं ति० रथं च M; छत्रं ति० रथं च Be 7 D; छत्रं ति० रथस् (omitting च) UB; छितस्ति० रथस् Be.

२ Thus M sec. m., ०तंछितं pr. m.; ०तच्छत्र Be 7 BDU; ०तद्रथं Be.

३ पर्याय M; परियाय B; परीयाय the other MSS.

४ Thus M Be; ०शीर्ष्याः Be 7; ०शीर्ष्यः DU; ०शीर्ष्यैः B.

पर्यवेते मरुद्भ्यो गृहमेधिभ्यः सप्तदश कल्माषीर्वत्सतरीरालभते । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव सꣳस्थां कुर्वन्ति । तृतीये संवत्सरे पर्यवेते मरुद्भ्यः क्रीडिभ्यः सप्तदशावलिप्ता वत्सतरीरालभते । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव सꣳस्थां कुर्वन्ति । चतुर्थे संवत्सरे पर्यवेते मरुद्भ्यः स्वतवद्भ्यः सप्तदश राजीवा[1] वत्सतरीरालभते[1] । ऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव सꣳस्थां कुर्वन्त्येतदेवाहर्दीक्षते । संवत्सरमुख्यं[2] बिभर्ति । द्वादशोपसदस्तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदश उक्थ्यः सप्तदशो ऽतिरात्रस्तस्य मारुत स्तोमो भवत्यथैतेषां पशूनां त्रयः प्रथमे ऽहन्नैन्द्रामारुता उक्षाणः सवनीया आलभ्यन्त । एवं द्वितीय एवं तृतीय एवं चतुर्थे । पञ्चोत्तमे ऽहन्नालभ्यन्ते । वर्षिष्ठमिव ह्येतदहर्मन्यन्ते वर्षिष्ठः समानानां भवतीति ब्राह्मणमथैतेषां पशूनां यदि नश्यति म्रियते वा यास्वमेधे प्रायश्चित्तिस्तां कृत्वाथान्यं तद्दैवत्यं[3] तद्वर्णं तद्वयसं तद्रूपं[4] तज्जातीयं[4] पशुमालभन्ते । स एष पञ्चशारदीयो राज्ञो वा ब्राह्मणस्य वा । यः कामयेत

---

१ Thus Be 7; राजीवां D; राजीवं U; राजीर्वत्स॰ Be; राजीवत्स॰ B; उक्ष्णो राजीर्वत्स॰ M.

२ ॰मुखां M.

३ तद्देवत्यं MSS.

४ om. M.

बह्वोर्भूयान्स्यामिति स एतेन यज्ञक्रतुना यजेत। बह्वोरेव भूयान्भवति॥ ११॥

अग्निष्टुता यक्ष्यमाणो भवति। तस्य सर्वमेव समानं। पुरोरुच एवान्या। अस्याजरासो ऽग्न आयूꣳषि पवस इत्यैन्द्रवायवस्य। यजा नो मित्रावरुणेति मैत्रावरुणस्याश्विना पिबतꣳ सुतमित्याश्विनस्य। द्वे विरूपे चरतः पूर्वापरं चरतो मायथैताविति शुक्रामन्थिनोस्त्रीणि शता त्री षहस्राण्यग्निमित्याग्रयणस्य। नियुनक्त्युक्थ्यस्य। नित्या ध्रुवस्याग्निनाग्निः समिध्यत इत्यैन्द्राग्नस्याग्निर्देवानां जठरमिति वैश्वदेवस्याग्निस्त्रियो यदुत्तम ईडे अग्निꣳ स्ववसमिति तिस्रो मरुत्वतीयानाꣳ। श्रुधि श्रुत्कर्ण वह्निभिरिति माहेन्द्रस्य। विश्वषामदितिर्यज्ञियानां त्वे अग्ने त्वामग्न इति तिस्र आदित्यस्य[1] ग्रहस्य[1]। नि त्वा यज्ञस्य साधनमिति सावित्रस्य। नित्या पात्नीवतस्य। नियुनक्ति हारियोजनस्य। स एष त्रिवृदग्निष्टुत्पवित्रं। यथा ह वा इदं[2] दावादभिदूना[2] अभिदृष्टाः[2] पुनर्णवा[3] ओषधयो समुत्तिष्ठन्त्येवꣳ ह वा एष एतेन यज्ञक्रतुनेष्ट्वा शुचिः पूतो मेध्यो भवति। स यदि मुखेन पापकन्मन्येत त्रिवृतं कुर्वीतै।ष ह वै

---

१ आदित्यग्रहस्य M.

२ My conjecture; इयं दवादभिदुनादभिदृष्टां M; इदमभिदुनादभिदृष्टाः B Be 7 (pr. m.) D (pr. m.) U Be (pr. m.); इयं दावादभिदुग्धेदं Be 7 D in margin; इदं देवा अभिदुनादभिदृष्टाः Be (sec. m.).

३ Thus Be 7 BDU; पुनर्नवा Be M.

मुखेन पापं करोति यो ऽनूचानस्य वा मुनेर्वा दुरवगतमवगच्छति । यदि बाहुभ्यां पञ्चदशं कुर्वीतै॑ष ह वै बाहुभ्यां पापं करोति यो ब्राह्मणायोद्यच्छते । यद्युदरेण सप्तदशं कुर्वीतै॑ष ह वा उदरेण पापं करोति यो ऽनाश्यान्नस्यान्नमश्नाति । यदि पद्भ्यामेकविꣳशं कुर्वीतै॑ष ह वै पद्भ्यां पापं करोति ॥ १२ ॥

य[१] आरट्टान्वा[१] गान्धारान्वा[२] सौवीरान्वा करस्करान्वा[३] कलिङ्गान्वा गच्छति । स यदि सर्वश एव पापकृन्मन्येत चतुष्टोमेनाग्निष्टोमेन यजेत । तेन हैतेनर्तुपर्णो भाङ्गाश्विन[४] ईजे[४] शफालानाꣳ[४] राजा । तेन हेष्ट्वा ग्टगयामभिप्रययौ । तꣳ हेन्द्रो ऽनुख्यायैवेर्चां[५] चक्रे ऽहमु त्वा तद्यातयेᳲ[६] यन्मा[७] यज्ञक्रतोरन्तराय[७] इति । स ह स्विन्न उदकमभ्यवेयाय[८] । तꣳ ह तत्रैव स्त्रियं चकार । सा सुदेवला नामास । सा हैतदेव राष्ट्रमभ्याहरोह । सा स्त्री सती पुत्राञ्जनयां चकार । तेभ्यो हेन्द्रः समदं दधौ । ते हता विदृढाः शिश्यिरे[९] । तानुभया-

१ Thus Be 7 D; योराट्टान्वा M Be; योराष्ट्रान्वा B; योरा-न्वा U.

२ गन्धा॰ M.

३ Thus M Be 7 D; कार॰ Be BU.

४ ॰माश्विनꣳ रंजनीयानाꣳ M.

५ ॰र्चां M Be 7 U; ॰र्श्वां Be B.

६ तद्यजातयेय M.

७ i.s.o. यन्मा यज्ञ॰ Be D: यः संशयात्मा यज्ञ॰ ।

८ Thus M Be 7 D; ॰मभ्युपेयाय Be B.

९ Corrected; शि (or श्वि ?) श्रिरे M; शिश्रिरे the other MSS.

नन्तरेण हृदन्यासां चक्रे। ऽथो हेन्द्र आजगाम। ताम्[1] हाभ्युपेयाय[1]। ताꣳ होवाच सुदेवला३[2] इति[2]। भगव इति। प्रियं तवैतदिति[3]। किं मे भगवः प्रियं भविष्यतीत्येवं वै मम तदप्रियमासीद्यन्मा यज्ञक्रतोरन्तरायो वृणीष्व नु यतरे ते पुत्रा जीवेयुरिति। यानेव भगव स्त्री सत्यध्यगममिति होवाच। तस्माद्राज्ञः स्त्रियाः पुत्राः प्रेयाꣳसो भवन्तीति। स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत पुरा भ्रेषाच्छान्त्यै। ॥ १३ ॥

इन्द्रस्तुता यक्ष्यमाणो भवति। तस्य सर्वमेव समानं पुरोरुच एवान्यास्तिष्ठा हरी कस्य वृषा सुते सचेत्यैन्द्रवायवस्येन्द्रं वयं महाधन इति मैत्रावरुणस्य। द्विता यो वृत्रहन्तम इत्याश्विनस्य। स सूर आजनयज्ज्योतिरिन्द्रमुत त्यदाश्वश्वियमिति शुक्रामन्थिनोर्भरेष्विन्द्रमित्याग्रयणस्य। नित्योक्थ्यस्य। नियुनक्ति[4] ध्रुवस्य। महि चेत्रं पुरु श्चन्द्रमित्यैन्द्राग्नस्योरु णो लोकमनुनेषि विद्वानिति वैश्वदेवस्य। नित्या मरुत्वतीयानां। नित्या

---

१ My conjecture; तामथोभ्युपेयाय B Be; तानभ्युपेयाय M; ताभ्युपेयाय Be 7 D; तामभ्युपेयाय U.

२ सुदेवलाम्य इति (this is the way in which Nandīnāgarī expresses the pluti) M; सुदेवला इति Be Be 7 D; सुदेवलाति BU. Properly speaking we expect सुदेवला३इ इति, pluti from सुदेवले।

३ तवैतादिति all the MSS. exc. M, which reads तवैतादन्यदिति; is pluti contained again in तवैतात्?

४ नित्या M only.

माहेन्द्रस्या नो विश्वाभिरूतिभिः कदाचन स्तरीरसीन्द्राय गाव आशिरमिति तिस्र आदित्यस्य[1] ग्रहस्येमां[1] ते धियमिति सावित्रस्य । नियुनक्ति पात्नीवतस्य । नित्या हारियोजनस्य । स एष पञ्चदश इन्द्रस्तुदिन्द्रियकामस्य । यो वा[2] ज्येष्ठबन्धुरपभूतः स्यात्स एतेन यज्ञक्रतुना यजेताश्नुते हैव ज्येष्ठताम् । ॥ १४ ॥

अप्तोर्यामेण यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदस्त्रिवृद्बहिष्पवमानः पञ्चदशꣳ होतुराज्यꣳ सप्तदशं मैत्रावरुणस्यैकविꣳशं ब्राह्मणाच्छꣳसिनस्त्रिणवमच्छावाकस्य । त्रयस्त्रिꣳशो माध्यंदिनः पवमानश्चतुर्विꣳशꣳ होतुः पृष्ठꣳ रथंतरं च वैराजं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्ति । चतुश्चत्वारिꣳशं मैत्रावरुणस्य वामदेव्यं च शाक्वरं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्त्यष्टाचत्वारिꣳशं ब्राह्मणाच्छꣳसिनो नौधसं च वैरूपं[3] च सामनी अन्यतरेणान्यतरत्परिष्टुवन्त्येकविꣳशमच्छावाकस्य कालेयं च रैवतं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्ति । तमेतमष्टापृष्ठ इति छन्दोगा आचक्षते । त्रिणव आर्भवः पवमानस्त्रयस्त्रिꣳशमग्निष्टोमसामैकविꣳशान्युक्थ्यानि[4] सषोडशिकानि पञ्चदशानीतराणि

---

१ आदित्यग्रह॰ M Be.

२ om. Be 7 DU.

३ Thus (and cp. Śāṅkh. XV. 7. 4) M Tr U Be Keś.; वैराजं वैराज्यं or वैसत्यं the other MSS.

४ ॰न्युक्थ्यानि M Tr; ॰न्युक्थानि all the other MSS.

त्रिवृद्राथंतरः सन्धिस्तंत्क्षुद्राः पशवो ऽतिषेदुः[१]। सोमो वा एतदतिरिच्यमान इयाय[२]। ते[२] देवा[२] अब्रुवन्नप्तोर्वा अयमत्यरेचि तस्य को याम इति। तदप्तोर्यामस्याप्तोर्यामत्वं। तस्मा एतान्यतिरिक्तस्तोत्राण्यवकल्पयां चक्रुस्त्रिवृद्धोतुर्जराबोधीयं पञ्चदशं मैत्रावरुणस्य सौहविषं[३] सप्तदशं[३] ब्राह्मणाच्छंसिन उद्वंशीयमेकविंशमच्छावाकस्य वारवन्तीयं। तदु वा आहुर्यदच्छावाकचमसमनु यज्ञः संतिष्ठेतान्तं यज्ञं गमयेद्यो हान्तं यजमानो गामुकः[४] स्याद्गौत्र एव स्तुवीरन्होतानुशंस्यात्तथा मध्यतो यज्ञः समाधीयत[५] इति। तदु वा आहुः सर्वाण्येवाश्विनानि स्तुतशस्त्राणि स्युर्यद्ध[६] किंच[७] रात्रिमुपातिरिच्यते सर्वं तदाश्विनमिति[८] न्वेकमथापरं त्रिवृ-

---

१ The MSS. of the text seem all to be corrupt: °तिसेदु Tr; तिच्चेतुः M (if I see right!); तिसेतुः all the other MSS.; अतिसेदुरतिक्रामतीत्यर्थः Bhav. (read °क्रामन्तो°).

२ Thus M; इयायतेतंदेवा BUD; इयायतंदेवा Be; इयाचवेत्तंदेवा H; इयाववेतं Tr.

३ सौहविषं सप्त° MH; सौभरन्विहविषं सप्त° UD; सौ (सो) भरन्विहविंश-सप्त° Be Be 7; सौभरंन्विहविंशिसप्त° B; सौषध्वं सप्त° Tr.

४ Thus M only; कामुकः all the other MSS.

५ Thus MHTr Keś.; समापयत the other MSS.

६ Thus all the MSS.; तद्ध (i. s. o. यद्ध) Karmānta (one MS. यद्धि) Keś. and Rudr. on Āp. XIV. 4. 15.

७ किंचन M.

८ Some of the MSS. again इतो; read perhaps °मितीत्येक°।

त्पञ्चदशꣳ[1] सप्तदशमेकविꣳशमथैतेषां देवता अग्निरिन्द्रो विश्वे देवा विष्णुरिति ॥ १५ ॥ चतुर्थः ॥

मृत्युसवेन यक्ष्यमाणो भवति स उपकल्पयते शार्दूलचर्म सुवर्णरजतौ च रुक्मौ वैयाघ्रावुपानहौ[2] चार्मपक्ष्यावुपानहौ वृष्णिवाससं च क्षौमं च तिसृधन्वमासन्दीꣳ साधीवासां दुन्दुभिं विमितमौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृताः शतं[3] च[3] रथं[3] चैतेनोपक्लृप्तेन चित्रामायतीमुपरमत्यथ[4] चित्रयेति पूर्वाग्निमन्ववस्यत्युत्तपनीयꣳ शालीनो ऽन्वाहार्यपचनमाहिताग्निरथान्वारब्धे यजमाने जुहोति व्याघ्रो ऽयमग्नौ चरति प्रविष्ट इति षट् स्रुवाहुतीरथ यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन्राजानमधिविश्रयेममित्यथ वैयाघ्रावुपानहावुपमुञ्चते[5] द्यौरसीति दक्षिणे पादे पृथिव्यसीत्युत्तरे

---

१ ०दशं and the following, neutra HTr; पंचदशः सप्तदश एकविꣳशम० M; nominatives masc. the other MSS.; cp. also Rudr. on Āp. l. c.

२ वैय्याघ्रीयावु० M.

३ Uncertain again, cp. supra p. 354, 3; शतं च रथं चै० M; सतं च रथं चै० Bo 7 D; स्वं च रथं चै० BU; सितं च रथमे(तेनो०) Be.

४ Probably M reads चय, perhaps rightly, i.s.o. चय, cp. supra p. 350, 7.

५ वैय्याघ्राावु० Bo U; वैय्याघ्रियावु० M Be 7; वैयाघ्रियावु० D; वैशाघ्रावु० B.

ऽथ दक्षिणं जान्वाच्याभिसर्पति व्याघ्रो वैयाघ्रे ऽधि विश्रयस्व दिशो महीः। विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशदित्यथास्मै धनुः प्रयच्छति यथा राजसूये तथा तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याꣳ रुक्माभ्यां पर्युपास्यौदुम्बरे द्रोणे चतुष्टयीरपः समवनीयाभिषिञ्चति ॥ १६ ॥

या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्ष उत पार्थिवीर्याः। तासां त्वा सर्वासाꣳ रुचाभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसासिचं दिव्येन पयसा सह। यथासा राष्ट्रवर्धनस्तथा त्वा सविता करत् ॥ इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः। रथीतमꣳ रथीनां वाजानां सत्पतिं पतिम् ॥ वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसेति पुरस्तादेता एव तिस्रो ऽनुद्रुत्य रुद्रास्त्वा दक्षिणतो ऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसेति दक्षिणत एता एव तिस्रो ऽनुद्रुत्यादित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसेति पश्चादेता एव तिस्रो ऽनुद्रुत्य विश्वे त्वा देवा उत्तरतो ऽभिषिञ्चन्त्वानुष्टुभेन छन्दसेत्युत्तरत एता एव तिस्रो ऽनुद्रुत्य बृहस्पतिस्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन छन्दसेत्युपरिष्टादथास्यौर ऊर्ध्वमुन्मृज्यते ऽरुणं त्वा वृकमुग्रं खजंकरमित्यथास्य बाहू अनुमार्ष्टि प्र बाहवा सिसृतं जीवसे न इत्यथैनावुपावहरतीन्द्रस्य[1] ते वीर्यकृतो बाहू उपावहरामीत्यथास्मै धनुः प्रयच्छति यदि पुरस्तादप्रत्तं भवति समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमा-

१ °वुपावहरी° B; °वुपावहरंती Be Be 7 UD; °वुपावरोहती° M.

जनादुत्तरत एतद्रूपायितङ्ग्रतं[1] तिष्ठति रथस्य[1] तदभिप्रेत्यभिप्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा। आतिष्ठ वृत्रहन्तमस्तुभ्यं देवा अधिब्रवन्नित्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनु संचरन्तौ। दूरेहेतिरिन्द्रियावान्पतत्री ते नो ऽग्नयः पप्रयः पारयन्त्वित्यथ रथमुपतिष्ठते[2] नमस्त ऋषे गदेत्यथ रश्मीनादत्त एवा ब्रह्मन्तवेदस्तु तिष्ठा रथे अधि यद्वज्रहस्तः। आ रश्मीन्देव युवसे स्वश्व इति रथमातिष्ठत्यातिष्ठ वृत्रहन्रथमातिष्ठन्तं पर्यनु त्वेन्द्रो मदत्विन्द्रं विश्वा अवीवृधन्नित्यातो[3] ऽत्र[4] धनुरधिज्यं[5] कुरुते परि मा सेन्या घोषास्तन्मे ऽनुमतिरनुमन्यतामिति द्वाभ्यामथैतच्छतं[6] त्रिः प्रदक्षिणं परियाय[7] पुरस्तात्यायात्यथास्मै प्रत्यवरोहणत[8]

---

१ Uncertain again; स्रतं ति॰ रथस्य M; रुचं ति॰ रथस्य Be 7 BUD; (॰पायितः) स्थितस्थि॰ रथस्य (omitting च) Be.

२ Thus M Be BU; रथमुखं i.s.o. रथं Be 7 D.

३ Thus Be U; ॰वृधन्नित्यानित्यातो B; ॰वृधन्नित्यस्य सतो Be 7 D; M om. ग्रातो।

४ Thus M Be 7 D; अथ Be UB.

५ अधिज्यं M, प्रज्यं the other MSS.

६ ॰तच्छतं M; ॰तच्छ्रचं Be 7 BUD; ॰तद्रथं Be.

७ Thus D; पर्याय M; परीयाय Be 7; परीयाय Be; परियायाय BU.

८ Although this reading is presented by M only, I did not hesitate to put it in the text as lectio difficilior; the other MSS. all प्रत्यवरोहत; it seems we have in प्रत्यवरोहणतः an ablat. of the same signification as प्रोक्षणतः X. 10. s. f.; cp. also अभिप्रोक्षणत XVIII. 11 and above all XI. 12 (p. 81, 2).

आसन्दीं निदधाति । तां तथा प्रत्यवरोहति यथा राजसूये तथा । ॥ १७ ॥

यावदेवात्राध्वर्युस्तिष्ठति तावदेष प्रतिप्रस्थाता वारुणेन स्रुतेनोपरमति । वारुणस्य[1] वारुण्यौ भवतः स्विष्टकृतः स्विष्टवत्यावत्रास्मा[2] एतच्छतं[3] ददात्यथैनं विमितेनाभिविघ्नन्ति[4] । तस्योत्तरार्धे दुन्दुभिमासञ्जयति । तमस्तंयात्यादित्य आघ्नन्त्यथैनꣳ सꣳशास्ति यजमान वाचं यच्छ राष्ट्रे च[5] जागृहीति[5] । सो ऽत ऊर्ध्वं वाचंयमो भवति । स यत्किंच[6] व्याहरति ददामीत्येव व्याहरत्युपसंगच्छन्त एनमेते राजगृहाः सूतग्रामण्यः[7] क्षत्तसंग्रहीतारः कारुविशा इति । तेभ्यः पष्ठौहीं वेहतं ददाति । तां ते पचमाना रमयन्तो जागरयन्त आसते । ऽथाध्वर्युरपररात्र आद्रुत्य चतुष्टयीनामपां प्रत्येकं मन्थमुपमथ्यावघ्राय[8] वानवघ्राय वा प्रयच्छति । तꣳ स[9] भक्षयति तूष्णीमथैनं नवनीतेनाभ्यनक्त्येना व्याघ्रं परिषस्वजाना इत्यथादित्यमुद्यन्त-

---

१ वरु॰ all MSS. exc. M.

२ स्विष्टकृत्या॰ all exc. M.

३ Uncertain again; एतच्चं Be 7 BUD; एतच्चितं Be; M has a blank of two akṣaras.

४ Thus M; ॰भिनिघ्नंति the other MSS.

५ Thus M; चराजगृ॰ Be BU; चर्नाग्र॰ Be 7 D.

६ ॰किंचिद् M.

७ ॰ग्रामण्यः M.

८ उपमंथ्य i.s.o. उपमथ्य all MSS.

९ Thus M Be; सह the other MSS.

मुपतिष्ठत उदसावेतु सूर्य उदिदं मामकं वचः। उदिहि देव सूर्य सह वग्नुना मम। अहं वाचो विवाचनं मयि वागस्तु धर्णसिरिति ' राजगृहान्निप्रव्रजतो ऽनुमन्त्रयते यन्तु नद्यो वर्षन्तु पर्जन्याः सुपिप्पला ओषधयो भवन्तु। अन्नवतामोदनवतामामिक्षवतामेषाꣳ राजा भूयासमिति ' ॥ १८ ॥

अथैतद्द्वादशाहं[1] व्रतं चरति ' स यदि प्राङ् वोदङ् वोच्चरति चार्मपक्षीभ्यां क्षौमं वसानो ' ऽथ यदि दक्षिणतः पश्चाद्वा वैयाघ्रीभ्यां वृष्णिवाससं वसानो ' ऽथ द्वादशस्तु व्युष्टासु द्वे स्रुवाहुती जुहोति ये केशिनो नर्त इति द्वाभ्यामथ प्रोष्ठमारोहत्यारोह प्रोष्ठं विषहस्व शत्रूनित्यथास्य गिरः प्रमन्दयति[2] यत्सीमन्तं कङ्कतस्ते लिलेखेत्यथास्य केशान्वपति येनावपत्सविता क्षुरेणेति ' प्रवपतो ऽनुमन्त्रयते मा ते केशाननुगाद्वर्च एतदित्यथैनान्त्समुच्चित्य दर्भस्तम्बे निदधाति तेभ्यो निधानं बहुधा व्यैच्छन्नित्यथैनमुष्णोदकेनाप्लावयति बलं ते बाहुवोः सविता दधात्विति ' तेन हैतेन मृत्युरीजे प्रजानामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति ' ततो वै स प्रजानामैश्वर्यमाधिपत्यꣳ राज्यं पर्यैद्यः कामयेत समानानामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति स एतेन यज्ञक्रतुना यजेत ' समानानामैश्वर्यमाधिपत्यꣳ राज्यं पर्येत्यथ हैतेन सुरथः शैव्य[3] ईजे

---

१ अथैतंद्वा॰ M.
२ प्रमदयंति M.
३ शैव्यं M.

आतिष्ठ्यं परमतामियामिति । ततो वै स आतिष्ठ्यं परमतामैद्यः कामयेतातिष्ठ्यं परमतामियामिति स एतेन यज्ञक्रतुना यजेतातिष्ठ्यꣳ हैव[1] परमतामेति । ॥ १९ ॥ पञ्चमः ॥

सद्यस्क्रिया यक्ष्यमाणो भवति । स यूपं च वृत्तं छेदयति लाङ्गल्यं चैषां यूपस्य कारयति लाङ्गलं लाङ्गल्यस्य । तौ सꣳहृत्य भुञ्जते वा नि[2] वा[2] दधत्यथास्यैतत्पुरस्तादेव जुष्टे देवयजने वेदिसंमितं विमितं[3] कारितं भवति । तदेतेन लाङ्गलेन[4] परिहार्यं[4] कर्षयति । तस्मिञ्जघन्यवाप्यान्यवान्वापयित्वा[5] परिघातयत्यथास्यैते रथा उपक्लृप्ता भवन्ति चतुर्युक् प्रष्टिवाही द्वियोग[6] स्थूरिरिति[6] । तेषु काल एव दधिविनालानासञ्जयन्ति । स ग्रीष्मस्य जघन्याहःसु प्रजहितेषु यवेष्वृत्विजः पदेनाक्रापयतीष्या वा मा याजयिष्यथ भक्तं वा वः कारयिष्यामीति[7] । तेषूपसमेतेषु काल एव प्रातरग्निहोत्रं जुहोत्युपसंगच्छन्त एनमेत ऋत्विजो । ऽथैनानाह सद्यस्क्रिया मा याजयतेति । तं तथेतीतरे प्रत्याहुस्तस्मै तदानीमेव

---

१ एव om. M.

२ Thus M only; न वा दधत्य॰ Be; न वा दधात्य॰ BU; निदधाति वा Be 7 DU (bis).

३ om. M.

४ Thus MUDB Be 7; ॰लेनापरि॰ Be U (bis).

५ Thus M; तस्मिन्व्रीहीन् यवान्वावापयित्वा Be 7 DU; तस्मिन् जघन्यवापान्यवान्वापयित्वा Be; तस्मिन्व्रीहीन्यवान्वापयित्वा B.

६ Thus M; द्वियुगस्थूरि॰ the other MSS.

७ Thus M; करिष्यामीति the other MSS.

सद्यस्कार्यां[१] शालां कुर्वन्ति। तं[२] तदानीमेव तीर्थादानीय पवयित्वा दीक्षणीयामिष्टिं निर्वपति। तस्याꣳ सꣳस्थितायां मुष्टी चैव न करोति वाचं च न यच्छति। निदधत्यस्मा[३] एतद्धविरुच्छिष्टं व्रतभाजनमथ[४] प्रायणीयामिष्टिं निर्वपति। हविष्कृता वाचं विसृजते। ऽथास्मा एतद्धविरुच्छिष्टं प्रयच्छन्ति[५] ५
व्रतभाजनमेतत्प्रसूता एवैते रथा आजिं धावन्ति। योजनं प्राक् चतुर्युक्तैपदं[६] दक्षिणा प्रष्टिवाही। गव्यूतिं पश्चाद्द्वियोगः[७]। क्रोशमुदक् स्थूरिरिति। ते येनयेन संगच्छन्ते तस्मा आवेदयन्ते यजते ऽयमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्ता सद्यस्क्रियेत्यायन्ति रथा। आगतेषु रथेषु यद्विनालेषु १०
नवनीतमुत्सीदति तद्विलाप्योत्पूयाज्यकुम्भे[८] प्रत्यस्यति सद्यस्कायाः[९] इति। ॥ २० ॥

---

१ Thus M Be U (bis); सद्यस्क्रियां BDU; सद्यस्क्रीया Be 7.

२ तं only given by M.

३ Thus M Be U (bis); निदधात्य॰ B Be 7 DU.

४ Thus M Be U (bis); ॰भोजन॰ B Be 7 DU.

५ ॰यच्छति M Be.

६ Corrected; चतुर्युक्चैतंपदं Be U (bis); चतुर्युक्तैःपदं MBUD; चतुर्युक्तैचिक्रोशं पदं Be 7.

७ पश्चाद्वियोगः MDUB; पश्चाद्विक्रोशः Be 7; पश्चाद्वियुक् Be.

८ Thus MU (bis); ॰याज्यंकुंभे the other MSS.

९ सद्यस्काया Be U (bis), cp. Lāṭy. VIII. 4. 7; सद्यस्कायास्कार्या M; सद्यस्क्रिया Be 7 BDU.

अथ प्रायणीयेन चरति। प्रायणीयेन चरित्वा पदेन चरति। पदेन चरित्वा त्रिवत्सेन षण्डेन वत्सतरेण राजानं क्रीत्वोद्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्यैकगणा उपसदो भवन्ति। [1]मध्यमयोपसदा प्रचर्योत्तरवेद्यै काले खलेवालीं[2] मापयत्यथानडुहः संयुज्य यवान्प्रकृत्य[3] मृणन्ति[3]। यवपुरीषैवोत्तरवेदिर्भवत्यथ मध्ये ऽनडुहः संयुज्य प्राचो यवान्प्रगृह्णन्तो[4] यन्ति। यवबर्हिरेवैषा महावेदिर्भवत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय सदोहविर्धाने संमिनोति। सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय वसतीवरीर्गृह्णाति। तास्तदानीमेव परिहृत्य प्रातरनुवाकमुपाकरोति। परिहिते प्रातरनुवाके ऽपो ऽच्छैत्यद्भिरुदैत्यग्निष्टोमं क्रतुमुपैति। प्रसिद्धो ऽभिषवः। प्रसिद्धं ग्रहा गृह्यन्ते। समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वा तिस्रो रशना आदाय लाङ्गल्यामभ्यैति। तस्यै कटे परमिव चषालभाजनं भवति। शकलान्तां[5] लाङ्गल्यामुत्सृज्याथै-

---

१ All the MSS. exc. M have तन् before मध्यमयो॰।

२ M reads खलां i.s.o. खलेवालीं; are we to correct उत्तरवेद्यै काले खलां मापयति? But then somewhere the words खलेवाली यूपो भवति must have fallen out, cp. the Karmānta.

३ Thus M; प्रकृत्यमृणंति B; प्रमृत्यखणंति Be; प्रमृत्यमृणंति U; प्रहणंति U (bis); Be 7 D om. this passage.

४ प्रमृणंतो M; प्रमृह्णंतो all the other MSS; read perhaps प्रमृणन्तो?

५ Uncertain reading; शकलांतां M Be U (bis); सचषालांतां Be 7 DU; सचरषालांता B.

तान्पशूनुपाकरोत्यग्नीषोमीयमाग्नेयमनूबन्ध्यमिति । तेषामनूचीनं[1] वपाभिराद्रवन्ति । ॥ २१ ॥

अग्नीषोमीयस्याध्वर्युर्वपया प्रथमया प्रपद्यते[2] । ऽनूची इतरे आहरन्ति । परिहितासु स्तोकीयासु शृतासु वपास्वग्नीषोमीयस्य वपया प्रचरति । परीतरे श्रापयन्ति । प्रातःसवनीयानामग्नीषोमीयस्य पशुपुरोडाशो मुख्यो भवति । स्तुते माध्यंदिने पवमाने ऽग्नीषोमीयेण चरत्यनन्तर्हित[3] आग्नेयस्य[3] वपया चरति । स्वे धामन्नाग्नेयेन[4] चरत्यनन्तर्हित[5] एवानूबन्ध्यस्य[6] वपया चरति । तृतीयसवनीयानामनूबन्ध्यस्य पशुपुरोडाशो मुख्यो भवत्यसमुदिते ऽनूबन्ध्येन चरति । संतिष्ठते सद्यस्क्री । तस्य यदसद्यस्क्रियते व्यृद्धमेवास्य तत्पुनर्यज्ञ[7] एवास्य[7] तद्यथादित्याश्च[7] ह वा अङ्गिरसश्च सुवर्गे लोके पस्पृधिरे । ते

---

१ ०नूचीनां M.

२ प्रतिपद्यते M.

३ Thus M ; ०र्हितमाग्नेयस्य the other MSS.

४ Thus M Be B U U(bis) D (pr. m.) Be 7 (pr. m.) ; ०ग्नेयस्य Be 7 (sec. m.) D (sec. m.).

५ चरत्य० M Be 7 BD ; चरंत्य० Be U U(bis).

६ च ins. Be 7 BD.

७ Thus my conjecture ; तत्पुनर्यज्ञ एवास्य स तथादित्याश्च MU (bis) ; तद् ध्रुवमेवास्य तत्पुनर्यज्ञ एवास्य स तथादित्याश्च Be ; तत्सन्द्रयज्ञस्य सदथादित्याश्च B ; तत्सन्द्रयज्ञ एवास्य नदथादित्याश्च Be 7 DU.

ऽङ्गिरस आदित्यानभिप्रजग्मुरग्निना[1] दूतेन श्वःसुत्या न इत्यथास्माकमद्यसुत्येति ॥ २२ ॥

आदित्याः प्रोचुस्तेषां नस्त्वꣳ होतेति । ते ऽमुमादित्यमश्वꣳ श्वेतं भूतं दक्षिणां निन्यिरे[2] हिरण्याभिभूतरश्मनं[3] । तस्मात्स्वस्क्रियै श्वेताश्वो दक्षिणा हिरण्याभिभूतरश्मनो । यच्छ्वेताश्व आदित्यस्य तद्रूपमथ यद्धिरण्याभिभूतरश्मनो रश्मीनां तत्तस्य त्रिवृतः सतश्चतुर्विꣳशौ माध्यंदिनार्भवौ भवतश्चतुश्चत्वारिꣳशꣳ होतुः पृष्ठं । चतुर्विꣳशमग्निष्टोमसाम । त्रिवृदन्यत्सर्वꣳ । श्वेतमश्वं ददात्यनुक्रिया यक्ष्यमाणो[4] व्रीहिषु दीक्षते । स द्व्यहेन संतिष्ठत औपवसथ्यादेकमहः[5] सुत्यमेकमहस्तस्य त्रिवृत एव सतश्चत्वारिꣳशौ माध्यंदिनार्भवौ भवतश्चतुश्चत्वारिꣳशꣳ होतुः पृष्ठं । चतुश्चत्वारिꣳशमग्निष्टोमसाम । त्रिवृदेवान्यत्सर्वꣳ । श्वेतां वडबां ददाति । परिक्रिया यक्ष्यमाणो माषेषु दीक्षते । स त्र्यहेण संतिष्ठत आ क्रयादेकमहरौपवसथ्यादेकमहः[6] सुत्यमेकमहस्तस्य त्रिवृत एव सतो ऽष्टाचत्वारिꣳशौ माध्यंदिनार्भवौ भवतो । ऽष्टाचत्वारिꣳशꣳ होतुः पृष्ठमष्टाचत्वारिꣳ-

---

१ °प्र° found in M only.

२ Thus M; all the other MSS. more or less corrupt.

३ Thus here and infra all the MSS.; are we to read अभिहित° i.s.o. अभिभूत° ?

४ All MSS. exc. M ins. भवति ।

५ औपवसथाद° or ओपवसथाद° MSS.

६ Thus M; औपवसथाद° the other MSS.

ममग्निष्टोमसाम । त्रिवृद्देवान्यत्सर्वं । यथाश्रद्धं ददात्यतिक्रिया यक्ष्यमाणस्तिलेषु दीक्षते । स चतुरहेण संतिष्ठत आ क्रयादेकमहरोत्तरवेदेरेकमहरौपवसथ्यादेकमहः[1] सुत्यमेकमहश्चतुष्टोम एष भवति । ॥ २३ ॥ षष्ठः ॥

व्रात्यस्तोमेन यक्ष्यमाणो भवति । ते राजनि वा ब्राह्मणे वा प्रतिग्रहमिच्छन्ते मासाय वर्तवे वा । ते यमभिसंजानते तꣳ स्थपतिं कुर्वन्ति । स एषां व्रतानि चरति । सो ऽधःसंवेश्यमाꣳसाश्यस्त्वपायी भवति । तद्धि दीक्षितव्रतमथ यत्कृष्णं वासः कृष्णदूषं परिधत्ते दीक्षितवसनस्य[2] तद्रूपमथ यत्कृष्णवलक्ष्यावजिने धारयति कृष्णाजिनयोस्तद्रूपमथ यत्सुवर्णरजतौ रुक्मौ बिभर्ति परिधर्म्ययोस्तद्रूपमथ यत्कृष्णमुष्णीषं धारयति दीक्षितोष्णीषस्य तद्रूपमथ यच्चर्ममयैर्बाणवद्भिस्त्रिसृधन्वं धारयति दीक्षितदण्डस्य तद्रूपमथ यद्व्रात्यवादं वदति दीक्षितवादस्य तद्रूपमथ यत्क्षुर्यावुपानहौ[3] धारयति नेद्दीक्षितः सत्त्रमेध्यमधितिष्ठानीति[4] तत्तस्य ह वा एतद्रूपस्य यज्ञस्य प्रतोददण्ड एव यूपः । प्रतोदपरिषेवणं[5] चषालꣳ । रथमुखमा-

---

१ Thus M ; °रौपवसथाद° the other MSS.

२ Thus M ; °वसनीयस्य D ; °सवनीयस्य Be 7 ; the other MSS. still more corrupt.

३ Thus M ; यत्क्षुर्यातावुपानहौ Be 7 D ; यत्खलुयावुपानहौ B Be U.

४ Thus Be 7 ; °तिष्ठातीति M.

५ °परिषेवणं M.

हवनीय। ईषे[1] वेदिर्युगमुत्तरवेदिरुत्तरयुगमुत्तरनाभिर्धनुर्धौ[2] हविर्धाने। पक्षसी आग्नीध्रीयमार्जालीयौ। कूबरꣳ सदः। किंकरावतानां[3] धिष्णिया। वन्धुरं[4] पत्नीशालꣳ। रथोपस्थो गार्हपत्यो। ऽधिष्ठानं पुराणगार्हपत्यस्तं यमजं प्रमाथं[5] पचन्ते स एषां पशुर्यमपूपꣳ स्थालीपाकꣳ स चरुपशुपुरोडाशौ। यां परिष्कन्दꣳ[6] क्षयति सा पुरोनुवाक्या। यदाहरति सा याज्या। यदश्नन्ति स वषट्कारो। यां कुम्बां[7] विमते सा पुरोनुवाक्या। यामधीवाक्याꣳ[8] सा याज्या। यां विगणꣳ[9] क्षयति स शस्त्रस्य[10] प्रतिगरो[10]। यदभिक्रोशन्ति स उद्गीथस्ते य एवमेतं यज्ञक्रतुं परोक्षमुपेत्य[11] प्रत्यक्षं नोपेयुः ॥ २४ ॥

यथा दीक्षितावकीर्णा विच्छिन्नसोमपीथा अनाश्यात्वा एवꣳ स्युस्तस्माद्व्रात्यावस्थितस्य[12] व्रात्यस्तोमेनानीजानस्य नाश्यं।

---

१ Thus corrected; ईषौ M; ईषा the other MSS.

२ Thus M; धनुषौ the other MSS.

३ Thus M; किंक (or कु)रायतना the other MSS.

४ बंधुरं M; बधुरं Be.

५ Thus M; प्रमार्यं Be; प्रमाय Be 7 BUD.

६ प्रस्कंदं MSS. exc. M.

७ कुंभ्यां MSS. exc. M.

८ ॰मधिवाक्यां MSS. exc. M.

९ गणं MSS. exc. M.

१० शस्त्रप्रतिगरो MSS. exc. M.

११ परोक्षमुपेत्य Be BU; परोक्षादुपेत्य Be 7; पुरोक्षाउपेत्य M.

१२ ॰व्रत्याव॰ i.s.o. ॰व्रा त्याव॰ M.

विच्छिन्नसोमपीथ इव ह्येषो ऽनाग्न्यान्नस्तेषां ये ऽनाहिताग्नयस्ते यथागृहं विपरेत्याग्नीनाधाय त्रयस्त्रिंशतात्रयस्त्रिंशता दक्षिणाभि स्थपतिमुपसमायन्ति । तेषां ब्रह्मबन्धुरमागधो मागधवाक्यो ब्रह्मबन्धुरपुंश्चलूः पुंश्चलूवाक्या जरत्कट्रथो जरत्प्रयोग्याभ्यां[1] युक्तो । वृद्धो वा एष यो ब्रह्मबन्धुरमागधो मागधवाक्यो । वृद्धा ब्रह्मबन्धुरपुंश्चलूः पुंश्चलूवाक्या । वृद्धो जरत्कट्रथो जरत्प्रयोग्याभ्यां[1] युक्तो । वृद्धेनैव वृद्धं निरवदयते तदेतद्व्रात्यधनं समवशान्तं दण्डोपानहं शामूलाजिनं[2] । रथे तिष्ठन्सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति । दक्षिणानां काल एतदेवास्य भवत्यृत्विजो दक्षिणा विभजन्ते । तस्य प्रातःसवनीयाननुवर्तन्ते संज्ञान्यै इष्टीर्व्यसंज्ञातमिव वा एते चरन्ति ये व्रात्यं चरन्ति । समेवैनान्ज्ञापयन्ति । माध्यंदिनीयाननुवर्तत[3] ऐन्द्रामारुत[4] एकादशकपाल[5] । ऐन्द्रो वै व्रात्यो मारुतो ग्रामो । ग्रामेणैवैनान्समीचो दधाति । तृतीयसवनीयाननुवर्तत आदित्येभ्यो भुवद्वद्भ्यश्चरुरभूता इव वा एते चरन्ति ये व्रात्यं चरन्ति । भूतिमेवैनान्गमयन्त्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तत आदित्य-

---

१ ०प्रयोगाभ्यां MSS. exc. M.

२ शाल्मूकारितं M ; शार्दूलाजिनं the other MSS, but cp. Karmānta.

३ ०वर्तंत all.

४ ०मारुता all.

५ ०कपाल M ; ०कपाला the other MSS. ; this passage is missing in Be 7 D.

अहरप्रतिष्ठिता इव वा एते चरन्ति ये व्रात्यं चरन्तीयं वा अदितिरस्यामेव प्रतितिष्ठन्ति । ॥ २५ ॥

स एष ज्येष्ठानामग्निष्टोमस्तस्य चत्वारि षोडशानि द्वौ पवमानावुभे एवाच्छावाकस्य स्तोत्रे । एष एव[1] सन्कनीयसामुक्थ्यस्तस्य षट् षोडशानि सर्वे पवमानाः सर्वाण्यच्छावाकस्य स्तोत्राणि । तेन हैतेन मरुत ईजिरे । तेषां विष्णु स्थपतिरासाथो[2] हैतेन दैव्या व्रात्या ईजिरे । तेषां बुधः सौम्य स्थपतिरासाथो हैतेन कुरुब्रह्मणां पुत्रा ईजिरे । तेषामौपोदितिर्गौपालायनो वैयाघ्रपद्य स्थपतिरास । तेन हेष्ट्वा पञ्चालान्व्रात्या अभिप्रययुस्तान्ह पितर ऊचुर्मा पुत्रकाः पञ्चालान्यासिष्टोपवादिनो वै पञ्चाला उप वो वदिष्यन्तीति । तान्हानादृत्यैव प्रययुस्ते ह केशिनो दाल्भ्यस्योपवसथमाजग्मुस्तान्ह श्वो भूते बहिष्पवमानꣳ सर्पतो[3] ऽन्वालेभिरे पवित्रं वै बहिष्पवमान आत्मानं पवयिष्यामह इति वदन्तो । ऽथ ह पञ्चालेषु गन्धर्वायणो वालेय आग्निवेश्यो ऽनूचान आस । तान्ह[4] सह[4] सर्पतः पप्रच्छ के सर्पन्तीति[5] । वयं मरुत इति । तेषां वः क स्थपतिरित्यहं विष्णुरित्यौपोदितिर्गौपालायनो वैयाघ्रपद्यः प्रत्युवाच । यत्किं चकर्थ कस्तच्चचारेतीति ह परोचाव्रतमनु-

१ om. M.

२ स्थपतिरास तेनो Be.

३ संसर्पतो MSS. exc. M.

४ तान्हस्मह सह M; तान्सह UB Be; न्हसह Be 7 D.

५ Thus M; प्रसर्पतीति the other MSS. Read perhaps सर्पथेति ?

निर्दिदेशेति[1] । तान्होवाचाविदुषो व उपावादिषाप वो क्षुमह इति । पिता वै[2] तत्पुत्रानुपावादीदिति हैनमूचुः पापीयसी ते प्रजा भविष्यतीति । तथा[3] हैवास[3] । ततो[3] ह वा एतत्पञ्चालेषु गन्धर्वायणा वालेया आग्निवेश्याः पापायिता इव । महाकुलꣳ ह[4] तत्पुरा[4] बभूव । स यो व्रात्यमुपवदेदेवमेवैनमुपवदेदथ यो व्रात्यो ऽलं प्रतिवचनाय स्यादेवमेवैनं प्रतिब्रूयात् । ॥ २६ ॥

अथातो भाल्लविस्तोमा इत्याचक्षते । त्रिवृदभ्यावर्ति पञ्चदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । पञ्चदशमभ्यावर्ति सप्तदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । सप्तदशमभ्यावर्त्येकविꣳशमग्निष्टोमसाम सर्वे षोडशाः पवमाना । एकविꣳशमभ्यावर्ति त्रिणवमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रिणवमभ्यावर्ति त्रयस्त्रिꣳशमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्ति त्रिणवमग्निष्टोमसाम सर्वे षोडशाः पवमानास्त्रिणवमभ्यावर्त्येकविꣳशमग्निष्टोमसाम सर्वे षोडशाः पवमाना । एकविꣳशमभ्यावर्त्ति सप्तदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । सप्तदशमभ्यावर्ति पञ्चदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः । पञ्चदशमभ्यावर्ति त्रिवृदग्निष्टोमसाम सर्वे षोडषाः पवमानाः । ॥ २७ ॥ सप्तमः ॥

---

१ Conjecturally ; परोक्षाव्रतमनुदिनिदेशेति M ; परोक्षादव्रतमनुनिर्देशेति Be 7 DU ; परोक्षादव्रतमनुदिदिशेनिने B ; परोक्षाद् व्रतमनुदिदिशेनि Be.

२ All MSS. exc. M ins. the akṣara स्यां ।

३ तथा हैवस्यात्ततो MSS.

४ Thus M ; हैतत्पुरा the other MSS.

अथ वै भवति देवा वै यज्ञे ऽकुर्वत तदसुरा अकुर्वतेति । स हेचां चक्रे प्रजापतिः कथं[१] न्वहमसुरैर्देवान्व्यावर्तयेयमिति । स एतं यज्ञक्रतुमनिरुक्तमुपहव्यमपश्यत्तस्मिन्नेनानुपाह्वयतेति । स यत्राह प्रातर्याविभ्यो देवेभ्य इति मरुद्भ्यः प्रातर्याविभ्यो देवेभ्य इति तत्राहाथ यत्राह सोमः पवत इतीन्दुः पवत इति तत्राहाथ यत्राहेन्द्राय पुरोडाशानामिति शक्राय पुरोडाशानामिति तत्राहाथ यत्राह वायव इन्द्रावायुभ्यामिति नियुत्वते शक्रनियुद्भ्यामिति तत्राहाथ यत्राह मित्रावरुणाभ्यामित्यृतायुभ्यामिति तत्राहाथ यत्राहाश्विभ्यामिति नासत्याभ्यामिति तत्राहाथ यत्राहेन्द्राय सोमानिति शक्रायेन्दूनिति तत्राहाथ यत्राहेन्द्राग्निभ्यामिति शक्रजातवेदोभ्यामिति तत्राहाथ यत्राह विश्वेभ्यो देवेभ्य इति मरुद्भ्यो विश्वेभ्यो देवेभ्य इति तत्राहाथ यत्राहेन्द्राय मरुत्वत इति शक्राय गणवत इति तत्राहाथ यत्राह महेन्द्रायेति महते शक्रायेति तत्राहाथ यत्राहादित्येभ्य इति महद्भ्य आदित्येभ्य इति तत्राहाथ यत्राह वनस्पतय इति वनर्नृपायेति[२] तत्राहाथ यत्राह देवाय सवित्र इति महते[३] देवाय सवित्र इति तत्राहाथ यत्राह विश्वेभ्यो देवेभ्य इति महद्भ्यो विश्वेभ्यो देवेभ्य

---

१ कथन्वहमसु॰ M ; कथमन्वहमसु॰ Be 7 D ; कथयन्कथमसु॰ Be BU.

२ Conjecturally ; वनेर्पापायेति M ; वनेनच्यवयेति Be 7 D ; वनेनव्यवयेति B U ; वनेनर्पापायेति Be.

३ Thus M ; समहते Be 7 Be D ; ममहते BU.

इति तत्राहाय यत्राह देवानां पत्नीभ्य इति महतीभ्यो देवानां पत्नीभ्य इति तत्राहाय यत्राहेन्द्राय हरिवत इति शक्राय मघवत इति तत्राह । धाना इन्दुभ्य[1] इत्यु हैके संप्रदिशन्ति । ॥ २८ ॥

तदेतदर्वागेव यज्ञायज्ञियस्य[2] स्तोत्रायज्ञायज्ञियस्य वाव[3] स्तोत्रे स तां निरुवाच । तं हासुरा उपेक्षामेव चक्रिरे किं वा वै करोति[4] किं वा नेति । स यदा विदां चकार न वा इम एतर्हि पापभद्रयोरीशत इति तदेनां निरुवाच देवो वो द्रविणोदा इति । प्रजापतिर्वै देवो द्रविणोदाः । पूर्णां विवष्ट्यासिचमिति । पूर्णां व्युदक्षत्यासिचमिति[5] तदुद्वा सिञ्चध्वमुप वा पृणध्वमित्यास्य कामंकामं पूरयाध्वा इति तदादिद्वो देव ओहत इति । साध्येभ्यो देवेभ्यः प्रजापतिः कामंकाममूहते[6] । सप्तदश स्तोमो[7] भवति[7] । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । अश्वो ऽसितज्ञुर्दक्षिणा[8] । प्राजा-

---

१ Thus M Be; इंदुभ्य the other MSS.

२ ॰यज्ञीयस्य M Be.

३ om. all exc. M.

४ करोततौ (sic!) M; indication of pluti?

५ व्युदक्षत्य॰ B Be U; ह्युदक्षत्य॰ Be 7; युदक्षत्य॰ D; व्युदक्षंत्य॰ M.— ष्यसिच॰ BUD; ष्याश्चिच॰ M; ष्याश्चिष॰ Be 7 (pr. m.) Be; ष्यासिचच॰ Be 7 (sec. m.).

६ Uncertain reading, ॰मूहतं M; मूहतः the other MSS.

७ स्तोमा भवंति M; स्तोमो भवति the other MSS.

८ डिनायुर्दक्षि॰ i.s.o. सितज्ञुर्दक्षि॰ all the MSS. exc. M.

पत्यो वा[१] अश्वः[१] । प्रजापतेरनुरूपत्याय । यः पाप्मना भ्रातृव्येण व्याविवृत्सेत[२] स एतेन यज्ञक्रतुना यजेत । व्येव पाप्मना भ्रातृव्येणावर्तत । इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्तं देवा यज्ञेनान्वैषुस्ते[३] अतमाशिरं[४] दुहां[४] चक्रिरे[४] भूयो भागधेयं भूयसीं प्रीतिमभ्युपावर्त्स्यतीति[५] वदन्तः । स ह प्रातःसवने नाजगाम । ते[६] सर्व एव प्रातःसवनस्य भक्षयां[७] चक्रुः[७] । को ह्यपेन्द्रस्य[८] सोमस्य भक्षयिष्यतीति । तꣳ संतिष्ठमाने प्रातःसवने ऽच्छावाकस्य अस्तं प्रति[९] जक्षुस्ते[१०] सर्व एव चमसाध्वर्यव आनन्दिनो

१ Thus M; वाश्वः the other MSS.

२ Thus corrected (cp. S'at. Br. XII. 4. 4. 2); व्यावित्स्येति all exc. M, which has व्याविवर्त्सेत्।

३ अन्वैषुस्ते M; अन्वेषुस्ते the other MSS.

४ आशिरं दुदुहं चक्रिरे Be 7 Be D; आशिरं दुदुहे चक्रिरे B; आशीर्दुहां चक्रिरे M; cp. on this passage Pañc. Br. XVIII. 5. 12.

५ °पावर्तिष्यतीति M.

६ I.s.o. ते (thus M Be B), ततः Be 7 D.

७ Thus M; नानकयां चक्रुः or तानकयांचक्रुः the other MSS. (in Be 7 the passage is missing). Probably the negation has fallen out somewhere.

८ ह्यपेंद्रस्य M.

९ प्रतिप्रति M.

१० Thus my conjecture; चक्ष्युस्ते M; चक्ष्युस्ते or चक्षुस्ते the other MSS.; cp. Āp. śrs. XXII. 10. 13.

ऽच्छावाकस्य शस्त्रं प्रत्यागर्तुं[1] दध्रिरे[2] । सेन्द्रा इव ह्यमन्यन्त । तस्मात्तीव्रसोमे सर्व एव चमसाध्वर्यव आनन्दिनो ऽच्छावाकस्य शस्त्रं प्रत्यागृणन्ति[3] । सेन्द्रा इव हि मन्यन्ते । तर्हि वाव तदासीत्तदु वा आहुः सर्व एवैतर्हि यज्ञः सेन्द्र इति । तꣳ हाभिषुषुवुः[4] ॥ २९ ॥

इहा इहा इहेतीहेहीहेहीहेहीति[5] ह वा एनं तदूचुर्बृहद्बृहदितीदं[6] ते बृहदन्नाद्यं तदभ्युपावर्तस्वेति ह वा एनं तदूचुस्तदेतन्माध्यंदिनस्य सवनस्यान्यच्चापि निदानꣳ । स° श्रितकलशमेकधनानां° प्रातःसवने ऽवनयेद्दधि माध्यंदिने सवने । विमथितं तृतीयसवने । सास्य तीव्रता । सप्तदश स्तोमो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्यै । गर्भिणी वडवा ललामी दक्षिणेन्द्रियं वै गर्भ । इन्द्रियं ललामः । सेन्द्रियत्वाय[8] । यो ज्यान्या वोपतपता वाणिमानं नीतः स्यात्स एतेन यज्ञक्रतुना यजेताश्नुते हैव तीव्रतामिन्द्रो ऽकामयत वि पाप्मानꣳ हनीय

---

१ Thus M only; प्रत्यागर्तं or °गर्त्तं the other MSS.

२ M ins. न before दध्रिरे।

३ प्रतिगृ° MSS. exc. M.

४ Thus M; ह वा अभि° U; हवाभि° Be B; सहाभि° Be 7 D.

५ Thus M Be B; इहे तीहे इहे इहेहीति U; Be 7 D (which write only once इहा): इहेतिहेहिहेहिहेहीति।

६ Before इदं M has once more बृहद्।

७ Uncertain; M reads as above given; संश्रितकलशं Be 7 UDB; संश्रितंकलशं Be.

८ Thus M Be BU; सेंद्रत्वाय Be 7; सेंद्रात्वाय D.

श्रैष्ठ्यं देवानां गच्छेयमिति। स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत। ततो वै स वि पाप्मानमहत श्रैष्ठ्यं देवानामगच्छद्यः कामयेत वि पाप्मानꣳ हनीय श्रैष्ठ्यꣳ समानानां गच्छेयमिति स एतेन यज्ञक्रतुना यजेत। व्येव पाप्मानꣳ हते श्रैष्ठ्यꣳ समानानां गच्छति। तस्यातिग्राह्यो वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अधस्पदं तमीं कृधि यो अस्माꣳ अभिदासत्युपयामगृहीतो ऽसीन्द्राय त्वा वैमृधाय जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा वैमृधायेति। तस्य त्रिवृत्पञ्चदशौ विपर्यासꣳ स्तोमौ भवतस्ताः षड् गायत्र्यो। गायत्री[1] वै[1] छन्दसां[1] वि पाप्मानमहत। गायत्र्यैव तद्यजमानो वि पाप्मानꣳ हते। ॥ ३० ॥

इन्द्रो ऽकामयतौद्भिद्यꣳ[2] श्रैष्ठ्यं दवानां गच्छेयमिति। स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत। ततो वै स औद्भिद्यꣳ श्रैष्ठ्यं देवानामगच्छद्यः कामयेतौद्भिद्यꣳ श्रैष्ठ्यꣳ समानानां गच्छेयमिति स एतेन यज्ञक्रतुना यजेतौद्भिद्यꣳ हैव[3] श्रैष्ठ्यꣳ समानानां गच्छति। तस्यातिग्राह्यो ऽयं क्रतुरगृभीतो[4] विश्वजिदुद्भिदित्सोमः। ऋषिर्विप्रः काव्येनोपयामगृहीतो ऽसीन्द्राय त्वोद्भिदे जुष्टं गृह्णामीति। परिमृज्य सादयत्येष

---

१ Thus M only; गायत्र्येव वै छंदांसि all the other MSS.

२ All MSS. ins. ह वै exc. M.

३ हवै MB.

४ M ins. (against Taitt. Br.) वयोधाः।

ते योनिरिन्द्राय त्वोद्भिद इति । तस्य पञ्चदशैकविंशौ विपर्यासं स्तोमौ भवतस्ताः षड् बृहत्यो । बृहती वै छन्दसामुदभिनद्बृहत्येव[1] तद्यजमान उद्भिनत्तीन्द्रो ऽकामयत वलं[2] भित्त्वा पशून्सृजेयेति । स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै स वलं[2] भित्त्वा पशूनसृजत । यः कामयेत वलं[2] भित्त्वा पशून्सृजेयेति स एतेन यज्ञक्रतुना यजेत । वलमेव[2] भित्त्वा पशून्सृजते । तस्यातिग्राह्य इन्द्र ओषधीरसनोदहानि वनस्पतीँरसनोदन्तरिक्षम् । बिभेद वलं नुनुदे विवाचो ऽथाभवद्दमिताभिक्रतूनामुपयामगृहीतो ऽसीन्द्राय त्वा वलभिदे जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा वलभिद इति । तस्य सप्तदशैकविंशौ विपर्यासं स्तोमौ भवतस्ताः षड्गायत्र्यो । गायत्री[3] वै[3] छन्दसां[3] वलमभिनद्गायत्र्येव[3] तद्यजमानो वलं भित्त्वा पशून्सृजते । ॥ ३१ ॥ अष्टमः ॥

ऋतपेयेन यक्ष्यमाणो भवति । स यद्धनानां कामयते तस्याग्नितो भूत्वा दीक्षते यदा[4] लभते[4] तस्य । स एकाहं नाश्नात्यथाश्नाति । द्व्यहं नाश्नात्यथाश्नाति । त्र्यहं नाश्नात्यथाश्नाति । सो ऽचैव विराजमाप्नोति[5] । राजानं क्रीत्वोद्धातिथ्यं

---

१ बृहतीत्येव M.

२ बलं most of the MSS.

३ Thus M ; गायत्र्येव छंदसां वलभिद्गायत्र्येव the other MSS.

४ यद्वलंगते M.

५ Thus my conjecture ; विराडाप्नोति M ; विराजा यजतेति the other MSS.

निर्वपति । यद्यु वा एतदुपात्येति चतुरहं नाश्नात्यथाश्नाति । पञ्चाहं नाश्नात्यथाश्नाति । षडहं नाश्नात्यथाश्नाति । तिस्र उपसदस्त्रिꣳशत्संपद्यन्ते[1] । त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्द्धे । ऽथ य एकादश स्तन एवास्यै स । दुह एवैनां तेनाथ य एकत्रिꣳश स्तन एवास्यै स । दुह एवैनां तेन । स उपसत्त्वाज्यव्रतो भवति । शीतस्य[2] सर्पिषस्तिसृभिरङ्गुलीभिरुपहन्त्यथ द्वाभ्यामथैकया । शीतस्य[2] वैव[3] सर्पिषस्त्रिभिः पर्वभिरुपहन्त्यथ द्वाभ्यामथैकेन । विलीने वा सर्पिषि त्रीणि परूꣳष्यवदधात्यथ द्वे अथैकं त्रिस्तनद्विस्तनैकस्तनव्रतस्य रूपाणि कुर्वन्स नादित्याद्दिवा पर्यावर्तते नाग्नेरधि नक्तमौदुम्बरः सोमचमसश्चतुःस्रक्तिर्ब्रह्मा[4] त्रिवेदाः[5] सगोत्रः । ॥ ३२ ॥

सप्तदश स्तोमो भवति । सप्तदशः प्रजापतिः । प्रजापतिमन्नाद्यं नोपानमत्तं देवा व्रतसत्याभ्यामन्वैषुः[6] । स यदश्नाति यदेवाशनेनावरुद्धं तस्यावरुद्ध्या इति तदर्थ यन्नाश्नाति यदेवानशनेनावरुद्धं तस्यावरुद्ध्या इति तदर्थ यदुपसत्त्वाज्यव्रतो भवत्येतद्वै देवानां प्रियं धाम यदाज्यं । देवानामेव प्रियं धामावरुन्द्ध इति तदर्थ यन्नादित्याद्दिवा पर्यावर्तते नाग्नेरधि

---

१ ०पद्यते Be 7 BD ; ०पद्यंते M Be U.

२ Thus M ; विलीनस्य the other MSS.

३ Thus M ; विलीनस्य वैव Be U ; विलीनस्यैव Be 7 D ; विलीनस्य वै B.

४ ब्रह्म M.

५ Thus M B U ; त्रिवेदः Be Be 7 D.

६ ०मन्वैषुः all the MSS. exc. Be which has : ०मनैषुः ।

नक्तमेते वै देवानामृतसत्ये । नेद्देवानामृतसत्ये पृष्ठतः करवाणीति तदथ यदौदुम्बरो भवत्यूर्ग्वा अन्नाद्यमुदुम्बर । ऊर्ज एवान्नाद्यस्यावरुद्ध्या इति तदथ यत्सोमचमसो भवत्येतद्वै देवानां परममन्नं यत्सोमः । परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्द्ध इति तदथ यच्चतुःस्रक्तिर्भवति यदेव दिशो ऽन्नाद्यं प्राविशन्तस्यावरुद्ध्या इति तदथ यत्त्रिवेदा[1] भवति न ह्येतामेकवेदा दक्षिणामुद्यन्तुमर्हतीति तदथ यत्सगोत्रो भवत्यात्मा वै सगोत्र आत्मन्नेव यज्ञस्य यशो ऽन्नाद्यं प्रतिष्ठापयानीति तत् । ॥ ३३ ॥

तं माध्यंदिनीयैश्चमसैः सहोन्नीय जुह्वति । तमृत्विजो हुतं दक्षिणानां काले ब्राह्मण उपातिदिशन्ति । तं ब्राह्मणाः सन्तं[2] पर्युपविश्य भक्षयन्ति यदृतं मन्यन्ते तेन । यदृतेन भक्षयन्ति तदृतपेयस्यर्तपेयत्वं ॥ दिशो ऽकामयन्तान्नाद्यः स्यामान्नाद्यमवरुन्धीमह्यन्नाद्यमस्मासु प्रतितिष्ठेदिति । ता एतं यज्ञक्रतुमपश्यन्तंमाहरन्तेनायजन्त । ततो वै ता अन्नाद्यो ऽभवन्नन्नाद्यमवारुन्धतान्नाद्यमासु प्रत्यतिष्ठद्यः कामयेतान्नादो मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेतान्नाद्येवास्य प्रजा भवत्यन्नाद्यमवरुन्द्धे ऽन्नाद्यमस्यां प्रतितिष्ठति । तस्य चतसृषु बहिष्पवमानो[3] ऽष्टास्वष्टास्वाज्यानि[3]

---

१ त्रिवेदो M.

२ Thus corrected according to the Karmānta; समंतं all the MSS.

३ •मानोष्टाष्टान्याज्यानि M; •मानोष्टाष्टाज्यानि Be; •मानमष्टास्वाज्यानि B Be 7 UD; cp. supra XV. 18 (p. 222, 12).

द्वादशो माध्यंदिनः पवमानः षोडशानि पृष्ठानि सविंश[१] आर्भवः पवमानश्चतुर्विंशमग्निष्टोमसाम। तं दिशां चतुष्टोम इत्याचक्षते॥ छन्दांस्यकामयन्त यशो ऽश्नुवीमहि यशो ऽवरुन्धीमहि यशो ऽस्मासु प्रतितिष्ठेदिति। तान्येतं यज्ञक्रतुमपश्यन्तमाहरन्तेनायजन्त। ततो वै तानि यशो ऽश्नुवत यशो ऽवारुन्धत यश एषु प्रत्यतिष्ठद्यः कामयेत यशो ऽश्नुवीय यशो ऽवरुन्धीय यशो मयि प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेत। यश एवाश्नुते यशो ऽवरुन्द्धे यशो ऽस्मिन्प्रतितिष्ठति। तस्य स्तोमा अस्तुवतैकस्यामथ तिसृष्वेकस्यामथ तिसृषु। तमेतं छन्दसामेकत्रिक इत्याचक्षते॥ स्तोमा अकामयन्तेति समानः परिवादस्तस्य[२] स्तोमास्त्रिवृदथ त्रयः पञ्चदशास्त्रिवृदथ त्रयः सप्तदशास्त्रिवृदथ त्रय एकविंशास्तमेतं स्तोमानामेकत्रिक[३] इत्याचक्षते॥ ॥ ३४ ॥

इन्द्राग्नी वा अकामयेतां समानलोकौ स्याव समानं लोकमियावेति। तावेतं यज्ञक्रतुमपश्यतां। तमाहरतां। तेनायजेतां। ततो वै तौ समानलोकावभवतां समानं लोकमैतां समानलोकावपश्य[४] यौ कामयेतां राजा च पुरोहितश्च

१ Thus all the MSS (only संविंश D); in Be 7 स has been cancelled.

२ परीवाद॰ M.

३ Thus MD Be 7; एकंत्रिक BU; एकत्रिंश Be.

४ Thus M; ॰लोकावप्यज Be 7 BUD; ॰लोकावप्यद्ध Be.

समानलोकौ स्याव समानं लोकमियावेति तावेतेन यज्ञक्रतुना यजेयाताꣳ[१] समानलोकावेव भवतः समानं लोकमितो । ऽश्वरथो यज्ञायुधः प्रासङ्ग्यसमसः स ब्राह्मणस्य दक्षिणाश्व-तरीरथः सर्वायुधो ऽप्रासङ्ग्यः काꣳस्यस्तूणीबन्धः[२] स राजन्यस्य दक्षिणा । तस्य त्रिवृत्पञ्चदशौ विपर्यासꣳ स्तोमौ भवतस्त्रिवृ-देव ब्राह्मणस्य पञ्चदशो राजन्यस्य । तमेतमिन्द्राग्नियोः कुलाय इत्याचक्षत । एष एव सन्पितापुत्रीय एष सख्योर्यज्ञ एष भ्रात्रोः ॥ ॥ ३५ ॥ नवमः ॥

अभिचरणीयैः सोमैर्यक्ष्यमाणो भवति । स द्वयानि यज्ञायुधान्युपकल्पयते बाधकानि च तैल्वकानि च ग्रवानसो[३] ऽधिषवणे फलके पुरुषास्यस्य[४] वृषणौ । स यत्राध्वर्युरुपाꣳशुं ग्रहीष्यन्राजानमभिषुणोति तस्य यो ऽꣳशुः परापतति तमे-तस्मिन्पात्र आधायोपसंगृह्यायाहामुं जह्यथ त्वा होष्यामीत्या तमितोरास्ते । ऽथैतं भङ्गमाहवनीये ऽनुप्रहरतीदमहममुमा-मुष्यायणं परिस्नुना[५] भङ्गेन[५] विध्यामीत्यंत्र यं यजमानो द्वेष्टि

---

१ यजेतां all exc. M.

२ ॰तूणीबंधः Be ; ॰तूणिबंधः U; तूष्णीबंधः M ; ॰तूणिबंध्यः B ; त्रौणिबंधः Be 7 D.

३ Thus M Be ; ग्रवनभ्ये Be 7 D (cp. Āp. XXII. 4. 17, S'āṅkh. XIV. 22. 18, Ṣaḍv. br. III. 8) ; ग्रवाननभ्ये U ; ग्रवाननभोग्यो B ; cp. the Dvaidhasūtra.

४ Thus M ; all the other MSS. corrupt.

५ Thus M ; परिस्नुनासंग्येन Be U B ; परिपानाभंग्येन Be 7 D.

तं मनसा ध्यायत्यथैतत्पात्रं खरे यथायतनꣳ सादयत्यमुष्य त्वा प्राणे सादयामीति । स यं कं च ग्रहं गृह्णात्येवमेवैनं गृह्णाति । यद्[1] किं[1] च[1] पात्रꣳ सादयत्येवमेवैनत्सादयति । स एष त्रिवृदग्निष्टोम एकस्तोम[2] एकहविर्धानस्तꣳ श्येन इत्याचक्षते ॥ ऽथेषुः[3] । समानमभिचरणीयꣳ शिल्पं । तिसृषुतिसृषु[4] स्तुवते । रथो हविर्धानम॥थ संदꣳशः । समानमभिचरणीयꣳ शिल्पं । द्वौ त्रयस्त्रिꣳशौ मध्यत स्तोमौ भवतो । द्वे[5] हविर्धाने ॥ अथेन्द्रवज्रः । समानमभिचरणीयꣳ शिल्पं । पञ्चदश एष भवति ॥ ॥ ३६ ॥

दुरभ्रेन[6] यक्ष्यमाणो भवति । स उपकल्पयते षष्टिꣳ शतमानानि हिरण्यानि त्रिꣳशतꣳ सुवर्णानि त्रिꣳशतꣳ रजतानि[7] बह्वन्यद्धिरण्यꣳ । स आमावास्येन हविषेष्ट्वा सौर्यं चरुं निर्वपति । तस्मिन्सुवर्णꣳ शतमानं ददात्यथ सायꣳ हुते ऽग्निहोत्रे चान्द्रमसं चरुं निर्वपति । तस्मिन्रजतꣳ[7] शतमानं ददाति । स एवमेवैताभ्यामिष्टिभ्यामहरहर्यजमानो मासमेत्यथ दीक्षते । दीक्षणीयायां द्वादशमानꣳ हिरण्यं ददाति ।

---

१ यत्किंच M.

२ This word twice in Be 7 B U D.

३ Thus M only; येषु all the other MSS.

४ तिसृषु once in M, which adds also थ after स्तुवते ।

५ द्वेद्वे M.

६ Thus M U B Be; दुराभ्रेन D; दुराभ्येन Be 7.

७ राजत॰ M.

प्रायणीयायां चतुर्विꣳशतिमानं ददात्यातिथ्यायां द्वे[1] चतुर्विꣳशतिमाने[1] ददाति[1] । प्रथमायामुपसदि चत्वारि ददाति । द्वितीयस्यामुपसद्यष्टौ ददाति । तृतीयस्यामुपसदि षोडश ददाति । चतुर्थ्यामुपसदि द्वात्रिꣳशतं[2] ददाति । पञ्चम्यामुपसदि चतुःषष्टिं ददाति । षष्ठ्यामुपसद्यष्टाविꣳशꣳ शतं चतुर्विꣳशतिमानानां[3] ददात्यथातः शतसंख्यैवाग्नीषोमीयस्य हुतायां वपायां द्वे शते ददात्याग्नेयस्य हुतायां वपायां चत्वारि ददाति । प्रातःसवनीयेष्वष्टौ[4] ददाति । माध्यंदिनीयेषु षोडश ददाति । दक्षिणानां काले द्वात्रिꣳशतं ददाति । तृतीयसवनीयेषु चतुःषष्टिं ददात्यनूबन्ध्यस्य हुतायां वपायामष्टाविꣳशꣳ शतानां[5] ददाति । स यदेताभ्यामिष्टिभ्यामहरहर्यजते सूर्याचन्द्रमसोरेव तत्सायुज्यꣳ सलोकतामाप्नोति ॥ ३७ ॥

[6]अथ यद्धिरण्यदक्षिणो[7] भवति हिरण्मयमेव तद्यजमान

---

१ Thus M; चिꣳशतिमानं ददात्यथ Be B; in the other MSS. this passage is missing.

२ Thus M U; चिꣳशतं Be; in the other MSS. this passage is missing.

३ Thus M; °शतिमानं the other MSS.

४ °सवनीयेष्टौ Be 7 D.

५ Thus M Be 7; शतमानानां Be B U.

६ During the printing I was so happy as to obtain, for the remaining part of this praśna, from Mr. Muthu Dikshitar of Lalgudi (Manakkāl, Madras) a copy (designed by me as L) from a MS. in his possession. This MS. is in Grantha and independent from my MSS., but, on the whole, not much better.

७ Thus M; यद्धिरण्यं दक्षिणा the other MSS.

आत्मानꣳ संस्कुरुते । तस्य यदूर्ध्वं नाभेस्तत्सुवर्णमवाङ्[1] रजतं । यदा ह वै हिरण्मयो भवत्यथामृतो भवति । हिरण्मया ह वै देवास्तस्मात्ते ऽमृताः । सप्तदशस्तोमो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्या । उभे सामनी भवतश्छन्दोमयावेतत्पक्षौ[2] यजमान आत्मानꣳ संस्कुरुत । एतस्य लोकस्य जित्यै । स यदेतेन[3] यज्ञक्रतुना यजते सूर्याचन्द्रमसोरेव तत्सायुज्यꣳ सलोकतां जयति । तेन दुरशो । दुरश इव ह्येतयोर्देवतयोर्लोको ॥ ऽथ दुर्णाशेन[4] यक्ष्यमाणो भवति । स उपकल्पयते ऽनडुह्वतं च त्रयस्त्रिꣳशतं[5] च निष्काꣳस्तेन हैतेनानडुहो लोकं जयति । तेन हैतेन ज्योतिष्मन्तं लोकं जयति । तेन हैतेन ज्योतिषो ऽधि स्वर्गं लोकं जयति । सप्तदशस्तोमो भवति । सप्तदशः प्रजापतिः । प्रजापतेराप्त्या । उभे सामनी भवतश्छन्दोमयावेवैतत्पक्षौ[6] यजमान आत्मानꣳ संस्कुरुत । एतस्य लोकस्य जित्यै । स यदेतेन यज्ञक्रतुनेष्ट्वा न नश्यति तेन

---

१ Instead of अवाङ् (thus M Be B U) Be 7 D : अधो ; अवां L.

२ Thus Be B; ॰मयावेवतत्पक्षौ M; ॰मयावेनतत्तृतीयेपक्षौ L; the other MSS. deficient.— Here and infra (l. 13) Be after ॰पक्षौ ins. तृतीये पक्षे ।

३ यद् only given by M.

४ दुर्ण॰ or दुर्न॰ all MSS. exc. M L which have here and infra each time दूर्ण॰ ।

५ त्रयस्त्रिꣳशां M.

६ Thus Be; ॰मयावेवतत्पक्षौ M L; ॰मयायैवतत्पक्षौ the other MSS.

दुर्णाशस्तद्दुर्णाशस्य[1] दुर्णाशत्वं[2] ॥ केशी ह दार्भ्यो ऽपचितिकामो ऽपचितिनेजे न[3] नो[3] नामानि[3] परिहरन्ता[4] इति । ततो ह वा एतत्पञ्चालराजानां[5] नामानि परिहरन्ते[6] ॥ ३८ ॥

शीर्षण्या इति केशानाचक्षते । कुशा इति दर्भान्वेद्याविति[7] गैरेयकविमत्यौ[8] । ततो वै सो ऽपचितिमानभवद्यः कामयेतापचितिमान्स्यामिति स एतेन यज्ञक्रतुना यजेतापचितिमानेव[9] भवति । तस्य चतुर्विंशो बहिष्पवमानस्त्रिवृत्पञ्चदशान्याज्यानि । तास्तिस्रो गायत्र्यश्चतुर्विंशो माध्यंदिनः पवमानः पञ्चदशसप्तदशानि[10] पृष्ठानि । ते द्वे त्रिष्टुभौ । त्रिणव आर्भवः पवमान एकविंशमग्निष्टोमसाम । सैका जगत्येतानि वै छन्दसामपचिततमान्यपचितिमानेव भवति य एवं वेदासावादित्यो ऽकामयत त्विषिमान्स्यामिति । स एतं यज्ञक्रतु-

---

१ दुर्नश॰ Be, दूर्णाश॰ M L ; the other MSS. om.

२ Most of the MSS. दुर्णश॰ or दूर्णाश॰ (both times).

३ Thus M ; L om. नो ; तंननामानि Be ; तन्नोनामानौ Be 7 U D ; तंनोनामनौ B.

४ Thus M Be 7 D ; ॰हरंत Be B U L.

५ Thus M ; ॰पांचाल॰ the other MSS.

६ Thus M Be L ; ॰हरंत्या Be 7 D U ; ॰हरत्या B.

७ Uncertain ; दर्भानद्याविति M ; दर्भान्नद्याविति L ; दर्भांनविद्याविति Be B.

८ Uncertain reading ; गैरेयकविमंषौ ( or मेषौ ? ) M ; गैरेयकविमत्यौ Be 7 ; गौरेयकविमत्यौ Be B ; गेरेय॰ D ; गैरयकचितिमत्यौ L.

९ Thus M L ; एषु instead of एव all the other MSS.

१० Thus M Be U ; पंचदशःसप्त॰ B L ; Be 7 om. पंचदश ।

मपश्यत्तमाहरत्तेनायजत। ततो वै स त्विषिमानभवद्यः कामयेत त्विषिमान्स्यामिति स एतेन यज्ञक्रतुना यजेत। त्विषिमानेव भवति। तस्य[१] सौर्यो ऽतिग्राह्यः। सौर्यः[२] पशु-रुपालभ्य। एकविꣳश एष भवति॥ ॥ ३९ ॥ दशमः ॥

इन्द्रो ऽकामयतर्षभ इव पशूनामैश्वर्यमाधिपत्यꣳ राज्यं देवानां परीयामिति। स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत। ततो वै स ऋषभ इव पशूनामैश्वर्यमाधिपत्यꣳ राज्यं देवानां पर्यैद्यः कामयेतर्षभ इव पशूनामैश्वर्यमाधिपत्यꣳ राज्यꣳ समानानां परीयामिति स एतेन यज्ञक्रतुना यजेतर्षभ इव पशूनामैश्वर्यमाधिपत्यꣳ राज्यꣳ समानानां पर्येति। तस्यातिग्राह्यो वृषा सो अꣳशुः पवते हविष्मान्सोम इन्द्रस्य भाग ऋतयुः शतायुः। स मा वृषाणं वृषभं कृणोतु प्रियं विशꣳ सर्ववीरꣳ सुवीरमुपयामगृहीतो ऽसीन्द्राय त्वर्षभाय जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वर्षभायेति। तस्य पञ्चदशस्य सत एकविꣳशꣳ होतुः पृष्ठं ककुद्रो[३] रूपमिन्द्रेण ह स्म वै पूर्वे समाजिगमिषन्तो वनिष्ठुसवेन यजन्ते[४] हप्नो[४] न[४] इन्द्र[४] आविर्भविष्यति तस्मै[५] कामान्वच्छ्याम

१ तस्याः Be 7 D.

२ om. all MSS. exc. M L Be.— After the tenth adhyāya M breaks off.

३ ककुभो L.

४ Thus Be L; यजंतेसुपेतमिंद्र Be 7; यजंत उपतानिंद्र B; यजत उपेतानिंद्र U; यजंवेसुपैतान इंद्र D.

५ तस्मात् MSS. exc. L which has तस्मिन्।

इति[1] वदन्तो । वनिष्ठुसवेन यक्ष्यमाणो भवति । स उपकल्पयते शतमुत्तवेहतः[2] शतं दार्वाचितानि शतꣳ सर्पिष्पात्राण्यक्तं पयःपात्राण्यक्तं दधिपात्राण्यक्तं वसापात्राण्यौदुम्बरीं नावमुभयतोऽभिपतनां[3] परिगृहीतामथ प्रणेतृनेतेनोपक्लृप्तेन चित्रामायतीमुपरमत्यथ चित्रयेति पूर्वाग्निमन्ववस्यत्युत्तपनीयꣳ शालीनो ऽन्वाहार्यपचनमाहिताग्निर्यैतानि दार्वाचितानि प्रदोष एवाग्नावादधाति[4] । तेषु[5] प्रज्योतिषूत्तवेहतो[5] निघ्नन्त्यथैषामभ्यर्धान्वनिष्टून्मेदाꣳसीति[5] अपयन्त्यथोदित आदित्य आयातयत्यौदुम्बरीं[6] नावमुभयतोऽभिपतनां[7] परिगृहीतां प्रणेतृभिस्तस्यामुपस्तृणीते पञ्चाशता सर्पिष्पात्रैः पञ्चाशता पयःपात्रैः पञ्चाशता दधिपात्रैः पञ्चाशता वसापात्रैस्तस्यां वनिष्टून्मेदाꣳसीति संप्रकीर्याथाभिघारयति पञ्चाशता वसापात्रैः पञ्चाशता दधिपात्रैः पञ्चाशता पयःपात्रैः पञ्चाशता सर्पिष्पात्रैरथ पुरोऽनुवाक्यामन्वाह ॥ ४० ॥

---

१ Thus Be L ; वक्ष्यामीति Be 7 B U D.

२ Thus L ; ०मुत्तवैगतः Be 7 D ; ०मुत्तवेनिहतान् Be B U.

३ Uncertain reading ; उभयतोपतनां Be 7 B ; उभयतोभिपतनां Be U ; उभयतोवतानां (or ०वतारां ) D ; उभयतोभिपवमानं L.

४ ०दधति L.

५ तेन प्रज्योतिषू एवहतोनिघ्नन्ति L ; तेषु प्रत्योत्तिष्ठं(or ष)त्तवैहतो घ्नंत्य० Be 7 D ; तेन प्रज्योतिषुत्तवेहतांनिघ्नंत्य Be B U. अभ्यर्धाद् i. s. o. अभ्यर्धान् L.

६ Uncertain r. ; अयातयत्य० U B ; अयापयत्य० D ; अधापयत्य० Be 7 ; अयाभीतयत्य० B ; आधातयति L.

७ ०पतानां B ; ०वतानां Be 7 ; ०भिपतानां Be U. ०मुभयतस्त्वभिपतनां L.

इन्द्रो यातो ऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः। सेदु राजा क्षेति[१] चर्षणीनामरान्न नेमिः परि ता बभूवेति। यजतीन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति। ततो ददातु दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् स्वाहेति। तृप्त एवास्मा इन्द्र आविर्भवति। तस्मै[२] कामान्ब्रुवते॥ कानान्धꣳ[३] ह[३] वाभ्यश्वं बृहस्पतिराङ्गिरसो याजयां चकार। तस्य होपवसथीये ऽहञ्छ्रद्धा[४] वीयाय[४]। स होवाचाध्वर्यो[५] वि[५] वै[५] मे श्रद्धागात्त्वं मे यज्ञꣳ स्थापयेति। तꣳ होवाचान्यद्वै तदुपवसथः[६] श्वस्ते यज्ञः सꣳस्थातेति[७]। स होवाच समेव मे स्थापयेति। तस्य[८] ह तावद्विदित्वाग्रेण[९] हविर्धाने

---

१ क्षेति (as TBr. II. 8. 4. 3) Be B D U; क्षयति (as RV. I. 32. 15) Be 7.

२ तस्मिन् Be L.

३ Corrected; कामानाह B U Be (pr. m.); कामानाद्वैह Be 7; कामानाद्वैहं D; कानीववांह Be (sec. m.); कनीयवान्हय्य L.

४ My conjecture; हन्श्रद्धाविधाय B U L; हन्श्रद्धाविधाय Be; हन्पंचाद्धपिधाय Be 7 D.

५ Thus Be; all the other MSS. corrupt.

६ Uncertain r.; होवाचान्यद्वैतदु° Be 7 D; होवाचाध्वर्यवेतदु° Be B U; होवाच ऊर्ध्वस्थवेत उप° L.

७ °स्थातेति Be B U; °स्थाद्देति Be 7 D; °स्थायेति L.

८ तस्या MSS. exc. L.

९ तावद् only in Be (sec. m.); भवद् L; instead of विदित्वा (thus L Be) विर्द्धित्वा the other MSS.

चर्मण्युलूखलमुसले निधायाꣳशून्समवचुदां[1] चकार[1] यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे। इह द्युमत्तमं वद जयतामिव दुन्दुभिरित्यथ होतृचमसे वसतीवरीभ्यो ऽध्यपो[2] निःषिच्य समुदायुत्य जुहवां चकार यथा जना सꣳस्तये व्रतानि[3] कोव्रतिनां[4] व्रतमालोभयाति[5]। कानान्धस्य[6] प्रस्थितं[7] वाध्र्यश्वस्य[8] तीव्रसुतꣳ[8] अवदिन्द्र[9] जुषस्व स्वाहेति। स एष उन्मत्तस्य वा वीतश्रद्धस्य वा[10] नीतस्य[10] वा यज्ञः। सा[11] यदागता[12] स्यादथ चतुष्टोमेनाग्निष्टोमेन यजेत पुरा भ्रेषाच्छान्त्यै॥ ॥ ४१ ॥

मनुर्वैवस्वतो ऽकामयत प्रजाꣳ सृजेय प्रजामवरुन्धीय प्रजां विन्देया[13] मा[13] प्रजया चचीरन्निति[13]। स एतं

---

१ ॰समवभूथाश्चकार L.

२ चपो only in Be L.

३ हतानि MSS. exc. L: व्रातानि।—जनासस्तये L.

४ व्रतिनां Be; व्रतीन्पं L; हतीनां the other MSS.

५ व्रतमालोभयाति Be, ॰यति L; व्रतमामालोपयति the other MSS.

६ Thus Be L; the other MSS. corrupt.

७ प्रस्थितं all exc. Be which has प्रस्त्वितं।

८ वाभ्राश्वस्तीव्रसुतं Be B; वाभ्राश्वःस्तीहसुतं U; वाच्यस्वेदीहसुत Be 7; वाच्यस्वेदीहसुत D, वाध्र्यांश्वस्तिव्रसुतं L.

९ अवदिंद्रां Be 7 D; मिंद्रवदिंद्रा Be; निवपतींद्रा B; निवपंतींद्रा U; निवदिन्द्रो L.

१० Thus Be L; वतितस्य BUD; वक्तांतस्य Be 7.

११ स MSS.

१२ यदागत Be L; यदागम्रा B Be 7 DU.

१३ Conjecturally; विन्देय मा प्रजयाचचीरन्निति BU; विंदेय माप्रजमाच॰ Be; विंदेय माप्रजयाचचरंतीति Be 7 D; विन्देयप्रजयाचची॰ L.

यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै स प्रजामसृजत प्रजामवारुन्द्ध प्रजामविन्दतैनं प्रजयाक्षत[1] । यः कामयेत प्रजाꣳ सृजेय प्रजामवरुन्धीय प्रजां विन्देया[2] मा प्रजया क्षौरन्निति[2] स एतेन यज्ञक्रतुना यजेत । प्रजामेव सृजते प्रजामवरुन्द्धे प्रजां विन्दत[3] ऐनं[3] प्रजया क्षते । तस्य[4] प्राचीन-स्तोमास्त्रयस्त्रिवृतस्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविꣳशाः ॥ सो ऽकामयतान्नादी मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति । स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै तस्यान्नादी प्रजाभवदन्नाद्यमवारुन्द्धान्नाद्यमस्यां प्रत्यतिष्ठद्यः कामयेतान्नादी मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेतान्नाद्येवास्य प्रजा भवत्यन्नाद्यमवरुन्द्धे ऽन्नाद्यमस्यां प्रतितिष्ठति । तस्य दश स्तोमा । दशसुदशसु स्तुवते विराजो रूपं ॥ वागाम्भृण्यकामयतापरि-मितं यशो ऽश्नुवीयेति । सैतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै सापरिमितं यश आश्नुत । यः कामयेतापरिमितं यशो ऽश्नुवीयेति स एतेन यज्ञक्रतुना यजेतापरिमितमेव यशो

---

१ •क्षते all exc. Be L.

२ विंदेय मा प्रजामाक्षरंनिति Be D; विंदेय प्रजयाक्षरंतीति B Be 7 U विन्देय मा प्रजामाक्षीरन्निति L.

३ Thus corrected; विंदत एवं Be L; विंदेतैनं the other MSS.

४ Only in Be L.

ऽश्नुते । तस्य दशसु बहिष्पवमानः शते सहस्रे ऽयुते प्रयुते ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे ॥ ॥ ४२ ॥

यमो वैवस्वतो ऽकामयत पितॄणामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति । स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । ततो वै स पितॄणामैश्वर्यमाधिपत्यꣳ राज्यं पर्यैद्यः कामयेत समानानामैश्वर्यमाधिपत्यꣳ राज्यं परीयामिति स एतेन यज्ञक्रतुना यजेत । समानानामैश्वर्यमाधिपत्यꣳ राज्यं पर्येति । तस्य शते बहिष्पवमानः सहस्रे ऽयुते नियुते प्रयुते ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे पद्मे पल्वे । नित्यसुत्वा मनसैव स्तुवानो मन्यत एतावति[1] मे[1] स्तुतमित्यथ[1] सकृत्प्रवर्ग्यं । आतिथ्येन प्रचर्य गार्हपत्ये प्रवर्ग्यं प्रवृणक्ति । तेनाहवनीये प्रचरति । तं काल उद्वासयति । शिरो वा एतद्यज्ञस्य यदातिथ्यं । यशः प्रवर्ग्यः । शीर्षन्नेव यज्ञस्य यशो दधातीति नु सकृत्प्रवर्ग्या । ऽथ सुते प्रवर्ग्यः । पवमानेन चरित्वाग्नीध्रे[2] प्रवर्ग्यं प्रवृणक्ति । तेनाहवनीय एव प्रचरति । तं तदानीमेवोद्वासयति । शिरो वा एतद्यज्ञस्य यत्पवमानो । यशः प्रवर्ग्यः । शीर्षन्नेव यज्ञस्य यशो दधातीति नु सुत्याप्रवर्ग्या । ऽथ सकृत्प्रवर्ग्या । ऽथ सुते प्रवर्ग्या । ऽथ सुत्याप्रवर्ग्यः[3] ॥ ॥ ४३ ॥ एकादशः ॥

---

१ Uncertain r.; एतावतीमेस्तुतमित्यथ Be; एतावन्ति मे स्तुत॰ L; एतावती (ति) मेत्यथ the other MSS.

२ MSS. exc. L ins. वै ।

३ The close of this chapter must contain several corruptions.

[1]पुरूरवा ह पुरा ऐडो राजा कल्याण आस। तꣳ होर्वश्यप्सराभिदध्यौ। तꣳ संवत्सरं कामयमानानुचचारै।वꣳ ह स्म वै[2] पूर्वे ऽभिश्राम्यन्ति। तद्धातिचिरं मेने। तस्य ह धावतः पुरो रथं कर्तं दर्शयामास। तꣳ ह दृष्ट्वा राजावतस्थौ। तꣳ हावस्थाय न ददर्शाथो ह पुनरातस्थौ। तꣳ हास्थायैव ददर्श। स ह सारथिं पप्रच्छ सारथे किं पश्यसीति। त्वां भगव इति होवाच रथमश्वान्पन्थानमिति। स हैवाहं चक्रे दृश्यामि वै किलेति। तꣳ ह वागभ्युवाच न वै दृश्यस्यहं वै त्वामेतं[3] कर्तमदीदृशमित्यथ कस्त्वमित्यहमुर्वश्यप्सरेति होवाच। या त्वा संवत्सरं कामयमानान्वचारिषं। तां मा जायां विन्दस्वेति[4]। दुरुपचारा ह वै भवति[5] देवा[5] इति[5] होवाच। का त[6] उपचर्येति[6]। शतं[7] ममोपसदः[7] स्युः[7]। शतꣳशतं मा सर्पिष्कुम्भा

---

१ This and the following adhyāyas are found also in a badly corrupted tradition. I did not note all the various readings nor all my emendations; the list of them would fill more space than the text itself.

२ Thus L only; चैव or द्वैव the other MSS.

३ त्वयितं or त्वयितम॰ MSS.

४ L Be sec. m. वित्स्वेति।

५ Thus L U Be 7; भवंति देवा इति B Be (pr.m.); भगवती देवीति Be (sec. m.).

६ Thus L Be (sec. m.); तवाचार्येति the other MSS.

७ Instead of these three words given thus by Be and L (which only gives म instead of मम), the other MSS.: तं जानीमसदस्तु or तंजानीय इति सदस्य।

अहरहरागच्छेयुस्तदाग्नता स्याँ। न त्वा नग्नं पश्येयमिति। सर्वमेवैतद्भगवति सुकरमिति होवाच। कथा त्वपि[1] जाया पतिं नग्नं न पश्यतीत्यन्तर्वासं वसीथा[2] इति होवाचानग्नो भवेति[3]। तया सहोवासान्तर्वासं वसानः। सा ह स्म जाताञ्जातानेव पुत्रानपविध्यति। ताꣳ ह राजोवाच पुत्रकामा ह वै भगवति वयं मनुष्याः स्मो जाताञ्जातानु त्वमपविध्यसीति। सा होवाच पर्यवेतरात्रयो भवन्ति क्षीणायुषो ऽन्ये। भूयः प्रियं करवावहा इति। सायुं[4] चामावसुं च जनयां चकार। सा होवाचेमौ बिभृतेमौ[5] सर्वमायुरेष्यत इति। प्राङायुः प्रवव्राज। तस्यैते कुरुपञ्चालाः[6] काशिविदेहा इत्येतदायवं प्रव्राजं। प्रत्यङमावसुस्तस्यैते गान्धारय[7] स्पर्शवो ऽराट्टा इत्येतदामावसवम्[8]। ॥ ४४ ॥

अथो हास्या एषा पूर्वचित्तिरप्सरा स्वसा बभूव। सा हेक्षां चक्रे ज्योग् वै मे स्वसा मनुष्येष्ववात्सीद्धन्तैनामच्छाया-

---

१ त्वयि L, त्वपि the other MSS.

२ वसीया L Be (sec. m.) वासीत्याश्च the other MSS.

३ भवति MSS. exc. L, which has तेन ह वामनो भवतीति।

४ प्रायुं Be (sec. m.).

५ निभृते॰ Be L; the other MSS. om. these words.

६ ॰पांचालाः L B.

७ The proper names given acc. to Be (sec. m.); the other MSS. गांधारा (or री) पयस्पर्शवोदारा (or त्व) ह्रा (or श्रा)।

८ इत्येतन्मावसुम् or इत्येतन्मामवसुम् or इत्येतन्मामावसम् MSS.

नीति । तया सहागत्यैव संगमं न लेभे । ऽथो हास्या अवियूथमुपस्थापदासै । वऽ[१] ह स्म वै पूर्वासां महिषीणाऽ रूपं[२] भवति । तद्वृकरूपं कृत्वा प्रमाथं[३] चिकायाथो[४] हास्या उरण: चीरप आसन्दीपादे बद्ध आस । तऽ सा प्रममाथ । तस्मिन्ह्रियमाणे रुरुवे[५] ऽयमवीरज[६] इति । तच्छ्रुत्वा राजोत्पपात । तामभ्यानश्र[७] तामभ्युपेयाय । तऽ[८] सा[८] नकुली[८] भूत्वा प्रत्युपेयाय । तस्य हान्तर्वासमवलुलोपाथ ह सा विद्युतं जनयां चकार[९] । [१०]तऽ सा विद्युति नग्नमनुचख्यावथो ह राजाजगामाखारुहं वा अहमजीत उरणमत्यसारुहंहि नूनमिति[११] प्रत्यहं प्रजहिष्यामीति । किं व्यभूदिति । नग्नं त्वादर्शमिति[१२] होवाच । तस्यां प्रव्रजितायामप्रियविद्ध:

---

१ Thus (only अपि॰ or अवा॰) MSS.

२ Only in Be (sec. m.).

३ Thus Be L (sec. m.); प्रथं the other MSS.

४ विख्यायाथो Be (sec. m.); धिक्यायाथो or चिवयायाथो or विख्यायाथो the other MSS.

५ रुवेमे Be (sec. m.); रूपेमे L; रुप्रे the other MSS.

६ Corrupt; यमवीरजा Be (sec. m.) L; वमविराजा the other MSS.

७ ॰भ्यानरस MSS.

८ Conj.; तंकुली Be (sec. m.); तसंनेकुली the other MSS.

९ Thus L Be (sec. m.); जनयामास the other MSS.

१० Be 7 ins. साङ्के चकार, B Be (orig.) ins. सांद्दोषकार।

११ These corrupted words without any var. r. in all MSS.

१२ त्वाददर्शमिति MSS.

शोचꣳश्चचार[१] । तꣳ होवाच बृहस्पतिराङ्गिरसो हन्त त्वा शद्देन[२] याजयिष्याम्यापयि त्वा पुनर्जिन्विष्यामीति[३] । तꣳ शद्देन[४] बृहस्पतिराङ्गिरसो याजयां चकार । ताꣳ हावभृथादेवोदेत्य प्रतिददर्श । ताꣳ ह पुत्रौ प्रतीत्योचतुरिह नौ नय यत्र ते गतिर्बलिनौ[५] वां[५] पितरमशूशुच[५] इति । सा[६] होवाच सं वां[७] पुत्रकौ जनेय साहमिह तिस्र एव रात्रीर्वत्स्यामि नो ब्राह्मणस्य वचो मोघमसदिति । तया सह तिस्र[८] एव[८] रात्रीरुवासान्तर्वासं वसानस्तस्याꣳ रेतः सिषिचे । सा होवाच[९] कथमिदꣳ स्यादिति । कथꣳ हि नूना३मिति[१०] राजा प्रत्युवाच । सा होवाच नवां कुम्भीमाहरेति । तस्यामेनन्निःषिषेचाथ[११] ह कुरुक्षेत्रे बिसवत्यो[१२] नाम पुष्करिण्यस्तासामुत्तरार्ध्या सुवर्ण-

---

१ Conj.; शोभं चकार or चक्कार MSS.

२ दर्शने MSS.

३ ॰जिम्बिष्या॰ MSS.

४ शतेन MSS.

५ Thus Be ( sec. m., only ॰शुशुच ); ॰बलिचैनाग्निपतरं शुशूच or ॰बलिचैनामपित॰ the other MSS.

६ From सा unto होवाच (p. 399. 8) only in Be L.

७ वा Be.

८ om. Be.

९ cp. p. 399, n. 6.

१० नूनाचमिति L, नूनामिति the other MSS.

११ Thus L; तस्यामेनं॰ Be (sec. m.); तस्यामेषं the other MSS.

१२ विसवत्यो Be (sec. m.); विषस्वत्येनाः the other MSS.

सवनौ । तस्यामेनन्निचखान । तदश्वत्थो जज्ञे शम्या परिवृतो रेतसो ऽश्वत्थ आशयाच्छम्येषैव शमीगर्भस्य सृष्टिरेतन्निदानमथ[१] वै भवति सर्वेण[२] वै देवाः सुवर्गं लोकमायन्निति । स यत्र हैतद्यज्ञो देवेभ्यो ऽधि मनुष्यान्प्रत्यवरुरोहाश्वत्थꣳ[३] हैव तत्प्रत्यवरुरोह । तस्यारणी चक्रिरे[४] ऽयं वाव स यज्ञ इत्यथो खलु य एव कश्चाश्वत्थः[५] स शमीगर्भः । स यदाहोर्वश्यस्यायुरसि पुरूरवा इत्येतेषामेवैतत्पितापुत्राणां नामानि गृह्णात्यथो सामान्यमेवैतदूहेत[६] । तस्यां प्रव्रजितायां पुनरेवाप्रियविद्धः[७] शोचꣳश्चचार । तꣳ होवाच बृहस्पतिराङ्गिरसो हन्त त्वौपशदेन[८] याजयिष्यामि वि वै ते ऽप्रियमेवैष्यतीति । तमौपशदेन बृहस्पतिराङ्गिरसो याजयां चकार । ततो वै तस्याप्रियं[९] विनिनाय । तौ ह वा एतौ पौरूरवसौ नाम शदौपशदौ । स यो वित्तꣳ सिषाधयिषेत्तꣳ शदेन याजयेत्तस्य

---

१ °निधानमथ MSS exc. L.

२ cp. TS., I. 7. 1. 2.

३ °वरोहाश्वत्थं or °त्थ MSS.

४ वव्रिरे L Be (sec. m.); चक्रिरे the other MSS.

५ Thus L; खलु य एवाश्वत्थः Be (sec. m.); खल्वेवकश्व(स्व)श्वत्थः the other MSS.

६ Thus L; सामान्यमेवैत्यूहते Be (sec. m.); °मेवैभ्य ऊहते the other MSS.

७-९ only in L Be (sec. m.).

८ त्वा om. MSS.

दशसु बहिष्पवमान। एकैकोपगीयत[१] ऐकविंशत्यै[२] सुनोतीहैवाय[३] यो ऽप्रियं विनिनीषेत्तमौपशदेन[४] याजयेत्तस्यैकविंशत्यां बहिष्पवमान। एकैकावगीयत आ दशभ्यो॥ ऽथ प्राजापत्यौ नाम शदौपशदौ। तस्य तिसृषु बहिष्पवमानस्तिस्रस्तिस्र उपगीयन्त आ षट्त्रिंशतः। षट्त्रिंशत्सु बहिष्पवमानस्तिस्रस्तिस्रो ऽवगीयन्त आ तिसृभ्यो॥ ऽथ नैध्रुवस्य[५] कश्यपस्य शदौपशदौ। तस्य चतसृषु बहिष्पवमानश्चतस्रश्चतस्र उपगीयन्त आष्टाचत्वारिंशतो। ऽष्टाचत्वारिंशत्सु बहिष्पवमानश्चतस्रश्चतस्रो ऽवगीयन्त आ चतसृभ्यः॥ ॥ ४५ ॥

द्वादशः ॥

देवासुरा ह यत्र महासंग्रामं[६] संयेतिरे[७] तद्धेमानि[८] भूतानि द्वैधेव[९] व्यपचक्रमुर्देवानेवान्वन्यान्यसुरानेवान्वन्यानि[१०]।

---

१ Thus L; **एकैक उप॰** Be (sec. m.); **एकेनोप॰** the other MSS.

२ Corrected; **एकविंशत्यौ** L; **एकविंशत्यै** Be (sec. m.); **एकविंशते** (or **ने**)**त्य** the other MSS.

३ **सुनोति इहैवाय** L; **सुनोतीहैवाथ** Be (sec. m.); **सुनोति एषाय** the other MSS.

४ Thus L; **विनीर्निषे॰** Be (sec. m.); **वितीनिषे॰** or **वितितिनिषे॰** the other MSS.

५ **॰ध्रुव** L Be.

६ **महा॰** only in L and Be (sec. m.).

७ **सं** only in Be (sec. m.); **श॰** L.

८ **तयेमानि** L and Be (sec. m.); **तं धुमानि** the other MSS.

९ Thus L; **द्वेधे** Be; **द्वेद्वेधे** the other MSS.

१० **व्यपच॰** L Be; **व्यवच॰** the other MSS.

बृहस्पतिर्देवानां पुरोहित आसीदुशना[१] काव्यो ऽसुराणां। ब्रह्मण्वन्तो देवा आसन्ब्रह्मण्वन्तो ऽसुरास्ते बहून्संग्रामानविजयमाना आसां चक्रिरे। तेषां न कतरे चन भविष्यदाजज्ञुर्गन्धर्वो हैव सूर्यवर्चा भविष्यदाजज्ञे। तस्यो हेन्द्रो जायाया[२] उपह्रास्य[२] आस। ताꣳ होवाचामुदिताङ्गि[३] त्वमिदं गन्धर्वं पृच्छ किमर्थमिदं देवासुरा न विजयन्तीति। तं तथेति होवाच त्वमपि श्व आगच्छतादिति। स हान्तः समुद्रे हिरण्मया[४] नावया सहजानि कुमार्यां[५] चक्रे। ऽथो हेन्द्र आजगाम। स ह सौवर्णः पटरो भूत्वा नौमण्ड[६] उपशिश्लेष[७]। ताꣳ हागतमेव विदित्वा[८] पप्रच्छामुदिताङ्ग[९] त्वमिदं ब्रूहि किमर्थमिदं देवासुरा न विजयन्तीति। मोच्चैरिति होवाच कर्णिनी वै नौराप[१०] इति। ब्रह्मण्वन्तो देवा इति होवाच ब्रह्मण्वन्तो ऽसुरा इति। तच्छ्रुत्वेन्द्रो हरिशुकरूपं[११] कृत्वोत्पपात।

१ Thus MSS.

२ Thus L and Be (sec. m.), which has, however, ०ह्रास्यमास; याजयह्राप उपह्रास्य आस the other MSS.

३ ०म्हदितांगि or ०तांचि MSS.

४ हिरण्मया MSS. exc. B.

५ Uncertain; सहजनिकुमाल्यां L; r. सहजानिः? cp. TS. III. 2. 8. 5.

६ नौमंण्ड L; नौमंडप Be (sec. m.); नैमंथ्ये the other MSS.

७ ०शिस्लेष MSS. exc. Be which has: ०शिश्ले।

८ विक्ता L.

९ ०म्हतांग L Be (rightly?) ; ०मुदितांचि the other MSS.

१० Thus L; नौरूप Be (sec. m.); नोराप the other MSS.

११ Emended; हरिः शुकोरूप L; हरिः शुक्ररूपं the other MSS.

तꣳ ह दृष्ट्वाह[1] मघवन्भो[2] इति यतरेषाꣳ[3] हरिस्ते जेष्यन्तीति । स ह गत्वोशनसं[4] काव्यमुपमन्त्रयां चक्रे जयन्त्याश्च[5] दुहित्रा चतसृभिश्च कामदुघाभिः । स हाजग्मो ऽसुरेभ्यो ऽधि देवानुपसमियाय[6] । ततो ह वा एतद्देवा असुरान्महासंग्रामं जिग्युः । ॥ ४६ ॥

स ह गुरुरिव मेने गरमिव गीर्त्वा बहु वित्तमसुराणां प्रतिगृह्य । स होवाच गुरुरिवास्मि गरमिव गीर्त्वा बहु वित्तमसुराणां प्रतिगृह्य हन्त मा याजयेति । तं द्वादशस्तोमेनाग्निष्टोमेन बृहस्पतिराङ्गिरसो याजयां चकार । तेन हेष्टोर्ध्वꣳ हिरण्यमुज्जगार । तद्ध[7] दृष्ट्वेक्षां[7] चक्रे हन्ताहमिदमसुरेभ्यो निर्हराणीति । तद्धेन्द्र[8] आघ्रायेव शिलां[9] चकार । ते ह वा एत[10] औशनसा नाम कुरुक्षेत्रे पर्वतगाः[11] ॥

---

१ Uncertain; दृष्ट्वैवजह्वो L; दृष्ट्वैवाह्वो Be; दृष्ट्वैवयज्ञ the other MSS.

२ Thus Be; मघवर्यंम्मघवन्निति L; मघवान्मूमघववा the other MSS.

३ Thus L; यतर एषां Be; यद्तरेषां the other MSS.

४ Thus MSS. exc. Be which has स आग॰ and L: स आगत्यो॰ ।

५ My conjecture; जयंतश्च Be; जयन्तच L; जायत्याच or यत्याच the other MSS.

६ Thus L; ॰समीयाथ Be; ॰समीपय or ॰समीयाप the other MSS.

७ तंदृष्टे॰ Be; तद्दहृष्टो॰ L; तद्धतेदृष्टे॰ the other MSS.

८ Thus L; तथेंद्र Be; तथेंद्रे or तद्धेँद्रे the other MSS.

९ शिलीम् L.

१० Only in L and Be.

११ पर्वतेज्ञाः L.

स ह लघुरिवाचरदप्रतिष्ठितः[१] । स होवाच लघुरिव वा अस्म्यप्रतिष्ठितो[२] । हन्त मा याजयेति । तमेकविंशतिस्तोमेनाग्निष्टोमेन बृहस्पतिराङ्गिरसो याजयां चकार । ततो वै स प्रतितस्थावथो[३] हेन्द्रः[४] कामदुघा अवरुरुधे[५] । तं ह सायमेतमुवाच प्रातरेतादिति । प्रातरेतमुवाच सायमेतादिति । स एवमेव संवत्सरं नेनीयामास । स होवाच प्रातरेतादिति । मा सायमात्थ सायमेतादिति । मा प्रातरात्थ को ऽयमेतः कतमो ऽयमेतो । यमेनमेतं[६] मघवन् ब्रवीषीति[७] होक्ता प्रवव्राजाथो हेन्द्र उक्थानि कामदुघाश्चकार । तांह स वरुणाय प्रददाविदं तव[८] मम[८] चेदममुष्य[८] च नौ सहेति । बृहस्पतय आङ्गिरसायेदं नावाख्यास्ता विधारयानावहस्येदमज्यसीति[९] विष्णवे शिपिविष्टाय चेत्यैषैवोक्थानां

---

१ ०ाचरद० only in L and Be.

२ ०वास्मिंनप्रति० Be; वा अस्मिनप्रति० L; ०वल्वाप्रति० the other MSS.

३ Emended; प्रत्यतस्थानथो L; प्रत्यवस्थापयदथो the other MSS.

४ हेंद्रं MSS.

५ अभिवरुधे L; अभिवरोधे Be; आवरोन्हे the other MSS.

६ यमेनमेतं (or ०तत्) L Be; यमैवमेतरन् or पयमेवमेतरन् the other MSS.

७ Thus L; ब्रवीषि इति Be; ब्रवीति the other MSS.

८ तवचमस इदममुष्य Be; तवचमसेवेदममुष्य L; तौव (तवि) मम चेदमुष्य the other MSS.

९ Thus (hopelessly corrupted as it seems) Be; नावास्याखद्विधारयाग्नावदहस्येदमज्मसीति L; नावास्याचा (or ना) पिधारयाषा (or वा) पदस्येदमंजवेति the other MSS.

सृष्टिरेतन्निदानमथो हास्यैव मनुर्वैवस्वतः शून्यमानः मन्त्रस्वास[1] । तस्मै चतुर्थीं प्रददौ । ताꣳ सो ऽस्यां न्यदधात्सेयं[2] कृष्टिरेवैष[2] कृष्टेः[2] सृष्टिरेतन्निदानं । तौ ह वा एतावौशनसौ नाम पुनस्तोमौ भवतः । स यो गुरुरिव मन्येत गरमिव गीर्त्वायाज्यं वा याजयित्वाप्रतिग्राह्यस्य वा प्रतिगृह्य तं द्वादशस्तोमेनाग्निष्टोमेन याजयेदश्नुते हैव लघुतामथ यो लघुरिव चरेदप्रतिष्ठितस्तमेकविꣳशतिस्तोमेनाग्निष्टोमेन याजयेत्प्रत्येव तिष्ठति ॥ ॥ ४७ ॥ त्रयोदशः ॥

अथ प्रणोदः । समानमभिचरणीयꣳ शिल्पं । प्रातःसवनीयाननुवर्तते ऽग्नये प्रवते पुरोडाशो ऽष्टाकपालस्त्रिवृद्देष भवत्यथ विबाधः । समानमभिचरणीयꣳ शिल्पं । माध्यंदिनीयाननुवर्तते ऽग्नये विबाधवते पुरोडाशो ऽष्टाकपालस्त्रिवृद्वैष भवत्यथ प्रतिनोदः[3] । समानमभिचरणीयꣳ शिल्पं । तृतीयसवनीयाननुवर्तते ऽग्नये प्रतीकवते पुरोडाशो ऽष्टाकपालस्त्रिवृद्वैष भवत्यथाग्नेरतिव्याधः । समानमभिचरणीयꣳ शिल्पमनूबन्ध्यस्य पशुपुरोडाशमनुवर्तते ऽग्नये वसुमते पुरोडाशो ऽष्टाकपालस्त्रिवृद्वैष भवत्यथैन्द्रवज्रः । समानमभिचरणीयꣳ शिल्पं । पञ्चदश एष भवति ॥ शुनस्कर्णा ह

---

१ Thus L Be ; स्वस (or न्म) स्वास the other MSS.

२ सेयं कृषिरेवैषकृषे L ; सोयं कृषिरेवैष कृषेः Be ; सेष्वेकृष्ठिरेष्वैवतुष्टेः the other MSS.

३ प्रतीनोदः L.

वै श्रैब्यो राजा पुष्यक्तद्रङ्गयाञ्चास । स ह पापीयाञ्जनतां[१] प्रतिह्निताः[१] प्रतिख्यायर्त्विजः[१] पप्रच्छास्ति स्वित्स यज्ञक्रतुर्येनाहमिष्ट्वैव प्रयायामित्यस्ति[२] ह्येति[२] हैनमृत्विजः प्रत्यूचुस्तस्मा अध्वर्युरयोनौनपुरोरुक्कान्[३] ग्रहान्जग्राह । स्वराण्युद्गाता सामान्यनैडान्यनिधनानि[४] । पराङेवग्निर्मयँ[५] होतानूवाच । स हावभृथादेवोदेत्य ममार । यं द्विष्यात्तस्यैवं यज्ञं[६] कुर्यादुपस्रुतं[७] वा याजयेत्क्षिप्रँ हैवास्माल्लोकात्प्रैत्यथ राशिमरायावित्याचक्षते । चतुष्टोमे राशिक्रतं[८] धान्यं ददाति । स राशिश्चतुष्टोम एव मरायक्रतँ । स मरायो ॥ ऽथाञ्जनाभ्यञ्जनावित्याचक्षत । आक्ताचा[९] अलंकृता[९] ऋत्विजः प्रचरन्ति । स

---

१ पापो (पापा) जनतां etc. as above Be L; पापीयांजानता प्रतिह्निताः प्रतिवा (or वा) वर्त्विजः the other MSS.

२ प्रययामी(मि)त्यस्ति ह्या२ (ह्या) इति Be L; प्रायणमित्यास्ति ह्यी२ इति the other MSS.

३ Conjecture; °धोनौनपुरोरुक्कान् Be; अथैनान्पुरोरुक्कान् L; अधोनपुरोरुक्तान् the other MSS.

४ सामान्यनैनतृनिनिध° Be; मान्यनैनन्यनिध° L; सामान्यनैलास्य° (लास्य°) the other MSS.

५ पराङेवग्यै Be; पराङ्वग्यें L; परां (or परा) इति (or इव) द्व (or ङ) घम्य the other MSS.

६ यज्ञे MSS.

७ °दुपाहृतं L.

८ राश्री° Be; राश्मि° the other MSS.

९ आंक्ताचालंकृता Be; आङ्क्ताकालंकृता L; आक्ताचालंकृता the other MSS.

आञ्जतो ॥ ऽभ्यक्ताः[1] शामूलवाससः[1] । सो ऽभ्यञ्जतो ॥ ऽथ विषूचीनशालो भ्रातृव्यवतो यज्ञः । स तथा देवयजनं जोषयते यथा प्राचीनमाहवनीयात्प्रवणꣳ स्यात्प्रतीचीनं गार्हपत्यादिति । तदेते विषूचीनशाले मापयन्ति[2] । प्रचरन्ति प्राञ्चः प्रत्यञ्चः प्रचरन्ति । मध्ये गार्हपत्यो भवति । मध्यत आसीनाय भक्षानाहरन्त्यनुदिशꣳ स्तोमौ स्यातामित्येतदेकमेकविꣳशौ[3] स्यातामित्येतदेकमनादृत्य तच्चतुष्टोमावेव कुर्वन्ति ॥ ॥ ४८ ॥

[4]देवासुरा ह यत्र महासंग्रामꣳ[5] संयेतिरे तद्ध शिबिरौशीनरो देवानां वर्गादसुराञ्जिगाय[6] । तस्मो हेन्द्रो जितवरं ददौ । स होवाच शिबिर्नैष्ठ्य[7] भयं न गच्छेदिति । तं वर्षिष्ठीयप्रस्थे[8] सर्वतोमुखेन याजयां चकार । ततो ह वा एतच्छिबिं नैष्ठ्यं[7] भयं न गच्छति । यं कामयेतानपजय्यं जयेदिति तं वर्षिष्ठीयप्रस्थे[8] सर्वतोमुखेन याजयेदनपजय्यमेव

---

१ भ्यक्तोभ्यात्मूलवासः L Be ; भ्यक्ताः सन्मूलवासः the other MSS.

२ ∘यंति Be ; ∘यति the other MSS.

३ ∘मेकविंशौ L Be ; विंशौ the other MSS.

४ For the following cp. also Eggeling, Catal. of the MSS. of the India Office vol. I, p. 87 (designed by me as E).

५ महा∘ om. all exc. E L.

६ Thus (∘सुरांजि∘) Be L only ; ∘सुराणाजिगाय∘ or ∘सुराणांजि∘ the other MSS.

७ नैष्ठ्यं L Be ; ज्यैष्ठ्यं or ज्येष्ठ्यं the other MSS.

८ Thus L Be ; ∘प्रस्थेन the other MSS.

जयति। तदेतास्वतस्रः शाला अनुदिशं मापयन्ति। प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति। मध्ये गार्हपत्यो भवति। मध्यत आसीनायाश्वतरीरथैर्भक्षान्संवहन्त्यनुदिशꣳ सोमाः स्युरित्येतदेकमेकविꣳशाः स्युरित्येतदेकमनादृत्य तच्चतुष्टोमानेव कुर्वन्ति॥ पार्थः। पार्थो[१]ह स्थपतिर्दैवानैष्मत्स[२] ह[२] सुतसोमान्सहस्रदक्षिणान्सहस्रमसुनोत्स ह[३] देवानाप[३]। स[३] एतान्सोमानाहरिष्यन्नुपकल्पयते[३] शालाः[४] सहस्रꣳ सहस्राणि सहस्रमश्वतरीरथाꣳस्तदेताः शाला अनुदिशं मापयन्ति द्वे च शते पश्चाच्छतं च पुरस्तादेवं दक्षिणत एवं पश्चादेवमुत्तरतः। प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति। मध्ये गार्हपत्यो भवति। मध्यत आसीनायाश्वतरीरथैर्भक्षान्संवहन्त्यनुदिशꣳ सोमाः स्युरित्येतदेकमेकविꣳशाः स्युरित्येतदेकमनादृत्य तच्चतुष्टोमानेव कुर्वन्ति॥ ॥ ४९ ॥ चतुर्दशः ॥

यमाभ्याꣳ स्तोमाभ्यां यक्ष्यमाणो भवति। स तथा देवयजनं जोषयते यथान्तरेण चात्वालोत्करावुदक्संचारी स्यादिति। तदेते प्रबाऊक् शाले मापयन्ति। स दक्षिणार्ध्याꣳ[५] शालामध्यव-

१ Thus Be; पार्थ and पार्श्वे the other MSS.

२ Instead of सह Be सन, L सन्न; सवन the other MSS.

३ Thus my conjecture; सहति एतान्सोमानाहरि॰ MSS. exc. Be which has only ससोमानाहरि॰ and L, which has सहेतिसहातान्सोमा॰।

४ शाला Be; शालाहं L; शालापि the other MSS.

५ Thus L Be; दक्षिणस्यां the other MSS.

साय मथित्वाग्नीन्विहृत्य दीक्षणीयामिष्टिं निर्वपत्यथोत्तरार्ध्यांꣳ शालामध्यवसाय मथित्वाग्नीन्विहृत्य[1] दीक्षणीयामिष्टिं[1] निर्वपति[1] । तयेह प्रचर्यायामुत्र प्रचरतीह दीक्षाहुतीर्जुहोत्यथामुत्रेह प्रायणीयामिष्टिं निर्वपत्यथामुत्र । तयेह प्रचर्यायामुत्र प्रचरतीह पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यथामुत्र । तेनेह प्रचर्यायामुत्र प्रचरतीह प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेह मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेह महावेद्यै पूर्वं परिग्राहं परिगृह्णात्यथामुत्रेहोत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेहाहवनीयं प्रणयत्यथामुत्रेह सदोहविर्धाने संमिनोत्यथामुत्रेहाग्नीषोमौ प्रणयत्यथामुत्रेह[2] यूपस्यावृता यूपमुच्छ्रयति स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोत्यथामुत्र । तस्येह प्रसिद्धं वपया चरित्वा वसतीवरीर्गृह्णात्यथामुत्रेह पशुपुरोडाशं निर्वपत्यथामुत्र । तेनेह प्रचर्यायमुत्र प्रचरतीहाग्नीषोमीयेण प्रचरत्यथामुत्रेह[3] वसतीवरीः परिहृत्य पयांꣳसि विशिष्योपवसन्त्यथामुत्रेह त्वेव संविशन्तीह राजानमुपावहृत्य प्रातरनुवाकमुपाकरोत्यथामुत्रेहानुपूर्वंꣳ सवनानि[4] संतिष्ठन्त आ समुदितादेवमेवोत्तरस्यांꣳ शालायांꣳ सवनानि[4] संतिष्ठन्त आ समुदितादिहावभृतेन प्रचरत्यथामुत्रेहोदयनीयामिष्टिं

---

१ These six words, indicated by ∘ in Be, are given only by L.

२ प्रणयत्य॰ L Be; प्रणयंत्य॰ the other MSS.

३ चरत्य॰ MSS.

४ Thus L Be; सवनीयानि the other MSS.

निर्वपत्यथामुत्र। तयेह प्रचर्याथामुत्र प्रचरतीहैव मैत्रावरुणीं वशामुपाकरोत्यथामुत्र। तयेह प्रचर्याथामुत्र प्रचरति। समान्युद्वसनीयेष्टिरथ[1] यत्प्राक्[2] सवनेभ्यो[2] ऽधि व्यतिषक्तानि कर्माणि क्रियन्ते तस्माद्यमावन्तरुदरे व्यतिषक्तौ सह[3] शयाते। अथ यदनुपूर्वꣳ सवनानि संतिष्ठन्ते तस्मादनुपूर्वौ जायेते। अथ यदूर्ध्वꣳ[4] सवनेभ्यो ऽधि व्यतिषक्तानि कर्माणि क्रियन्ते तस्मात्सहाशयन्ति सह पाययन्ति सह चरतो। ऽथ यत्समान्यरणिस्तस्मात्समानौ[5] योनिरग्निश्च ह वा आदित्यश्च समानलोकं[6] जिगीषमाणावेतं यज्ञक्रतुमपश्यतां तमाहरतां तेनायजेतां। ततो वै तौ समानलोकावभवताꣳ समानं लोकमैतां[7]। यः कामयेताग्नेश्चादित्यस्य च समानं लोकमियामिति स एतेन यज्ञक्रतुना यजेताग्नेश्चैवादित्यस्य च समानं लोकमेति॥ ॥ ५० ॥ पञ्चदशः ॥

वाजयाजी ह वा अन्यो भवत्यन्य उ वाजपेययाज्येष ह वै वाजयाजी यः पेयैरनिष्ट्वाथ वाजेन यजत एष उ वाजपेययाजी यः पेयैरिष्ट्वाथ वाजेन यजते। तस्मादु पेयैरेवेष्ट्वाथ

१ Thus L Be; सामान्योद्व० the other MSS.

२ यत् only in L; प्रातः instead of प्राक् L; सवनीयेभ्यो L Be.

३ Only in L and Be.

४ यदनुपूर्वꣳ MSS. exc. and Be.

५ यत् om. L Be; यत्समान्यरणी the other MSS.

६ समानं L Be; समानलोका the other MSS.

७ After ऐतां L Be have समानलोकावपश्यत्; the other MSS. read समानंलोकावयवद्व्य or ०काव्यवद्व्य।

वाजेन यजेत। पेयैर्यक्ष्यमाणो भवति। सो ऽनिष्ट्वैव पौर्णमासीं दीक्षते। तस्यापरिमिता दीक्षा द्वादशोपसदः। स तथा राजानं क्रीणाति यथा मन्यते ऽमावास्यायै[1] मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति। तस्य तथा संपद्यते। प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाꣳसि विश्रिष्योपवसन्त्यथैताꣳ सवनेष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं। तया द्वादशाहानि यजते। ऽथ त्रयोदशे ऽह्नि पौर्णमासेन हविषा यजते येनास्यानिष्टं भवत्यथ चतुर्दशे ऽहन्यामावास्येन हविषा यजते येनास्यानिष्टं भवत्यथैतेषां यज्ञक्रतूनामेकेन यजते। ऽथ पुनर्दीक्षते। स एवमेव संवत्सरं यजते। तस्याहानि त्रिवृत्पञ्चदशो[2] ऽथ त्रिवृत्सप्तदशो ऽथ त्रिवृदेकविꣳशो ऽथ त्रिवृत्त्रिणवो[3] ऽथ त्रिवृत्त्रयस्त्रिꣳशो ऽथ त्रिवृच्चतुष्टोमो[4]। मासानामेव रूपं पेयाः[5]। संवत्सरस्य रूपं वाज। एवमस्यैष[6] संवत्सरः परीष्ट एवमाप्तो भवत्यथाहीनविधिस्तस्याहानि[7] त्रिवृत्पञ्चदशः[8] सप्तदशश्चतुष्टोमस्त्रिवृदेवाथैकविꣳशो[8] ऽथ त्रिणवो ऽथ चतुष्टोम-

---

१ स्यामावास्यै Be, मावास्यै L (the other MSS. om. this passage).

२ Thus L Be; ॰पंचदशः सप्तदशः the other MSS.

३—४ Thus L Be; the other MSS. have only त्रिवृत्चतुष्टोमो।

५ Thus L Be; रूपमपेयान् or ॰पेयात् the other MSS.

६ Thus L Be; स्य एष the other MSS.

७ ॰विधस्तस्या॰ Be.

८ Thus L Be; ॰पंचदशःचतुष्टो॰ the other MSS.

स्त्रिवृद्देवाथ त्रयस्त्रिꣳशो ऽथ चतुष्टोमस्त्रिवृद्देवाथ[1] चतुश्चत्वारिꣳशो ऽथ चतुष्टोमो ऽथातिरात्रो। द्वादश[2] मासाः सप्तदश क्रतवो। नवसु मासेषु नव क्रतूनुपैत्यथातिशिष्यन्ते त्रयश्च मासा अष्टौ च क्रतवः। स द्वौ त्रिरात्रौ कुरुत एकं च द्विरात्रं। यद्यु वा एतदुपात्येति चतुष्टोमेनाग्निष्टोमेन यजेत। मासानामेव रूपꣳ स्तुतशस्त्राणि संवत्सरस्य रूपमग्निष्टोमो[3] वाज[3]। एवमस्यैष[3] संवत्सरः परीष्ट एवमाप्तो भवत्यथातो ऽयुजश्चैव[4] युग्माश्चैकस्याꣳ स्तुवते ऽथ तिसृष्विति त्वयुजो। ऽथ युग्मास्तिसृषु स्तुवते ऽथाष्टास्विति युग्मा। अयुजां चैव[5] युग्मानां चैव सायुज्यꣳ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुः॥ ॥ ५१ ॥

अथातो दिशामेव। त्रिवृत्प्राच्यै। पञ्चदशो दक्षिणायै। सप्तदशः प्रतीच्या। एकविꣳश उदीच्यै। त्रिणव इत[6]

---

१—२ Wholly uncertain; चतुष्टोमैर्विꣳशो थ चतुष्टोमस्त्रिवृद्देवाथ चतुश्चत्वारिꣳशोथाष्टाचत्वारिꣳशोथ चतुष्टोमोथातिरात्रोद्वादश L Be; चतुष्टोमस्त्रिवृद्देवाथ चतुश्चत्वारिꣳशोथ चतुष्टोमोथातिरात्रोथ द्वादश the other MSS., partly incomplete.

३ Thus MSS. exc. Be, which reads ॰ष्टोमस्यैष and L, which omits वाज।

४—५ Thus, on the whole, L; युजश्चैकस्यां स्तुवते थ तिसृष्विती त्वायुजो थ युग्मांस्वतसृषु स्तुवते थाष्टास्विरिति युग्मा अयुजांश्चैव Be; युजश्चैव युग्यां (or या-) श्चैवतस्यां स्तुवते (ति) थ तिसृष्विति त्वयुजो थ पुमांस्वतसृषु स्तुवते थाष्टास्विरित्यथ गुग्मा अयुजश्चैव the other MSS.

६ Only in Be.

ऊर्ध्वायै । त्रयस्त्रिंशो ऽमुतो ऽर्वाच्यै । सर्वासामेव चतुष्टोमो । दिशामेव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुरथात ऋतूनामेव । त्रिवृद्वसन्तस्य । पञ्चदशो ग्रीष्मस्य । सप्तदशो वर्षाणामेकविंशः शरदस्त्रिणवो हेमन्तस्य । त्रयस्त्रिंशः शिशिरस्य । सर्वेषामेव चतुष्टोम । ऋतूनामेव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुरथात ऋषीणामेव । त्रिवृद्वसिष्ठस्य । पञ्चदशो भरद्वाजस्य । सप्तदशो विश्वामित्रस्यैकविंशो जमदग्नेस्त्रिणवः कश्यपस्य[1] । त्रयस्त्रिंशो गौतमस्यागस्त्यस्य[2] चतुष्टोम । सर्वेषामेव चतुष्टोम । ऋषीणामेव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुरथातो देवतानामेव । त्रिवृदग्नेः । पञ्चदश इन्द्रस्य । सप्तदशः प्रजापतेरेकविंशो ऽमुष्य[3] तपतस्त्रिणवश्चन्द्रमसस्त्रयस्त्रिंशो विश्वेषां देवानां[4] । सर्वासामेव चतुष्टोमो । देवतानामेव सायुज्यं सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुः ॥ ॥ ५२ ॥

अथातो दर्शपूर्णमासयोरयनमित्याचक्षते । सूर्याचन्द्रमसोरयनमित्येक आहुः । पौर्णमासेन[5] सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षाः षडुपसदः । स तया राजानं

---

१ कश्य° Be, काश्य° the other MSS.

२ Thus L and Be; all the other MSS. om. ऽग° ।

३ Instead of मुष्य Be: उप, L सु ।

४ Thus L Be; the other MSS. have एवं after देवानां ।

५ पूर्ण° MSS. exc. L.

क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाꣳसि विमिश्र्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्याग्नीषोमीय उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्ते पौर्णमासहवीꣳषि । प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाꣳ हविषामृजुधा ज्योतिरुक्थ्यः संतिष्ठत ॥ आमावास्येन सोमेन यक्ष्यमाणो भवति । दीक्षते । तस्यापरिमिता दीक्षा द्वादशोपसदः । स तथा राजानं क्रीणाति यथा मन्यतेऽमावास्यायै मे यज्ञिये ऽहन्सुत्या संपत्स्यत इति । तस्य तथा संपद्यते । प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहरिन्द्राय वत्सा अपाकृता भवन्त्यैन्द्रं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाꣳसि विमिश्र्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति । तस्यैन्द्र ऋषभ उपालम्भ्यो भवति । तस्य प्रातःसवनीयाननुवर्तन्त आमावास्यानि हवीꣳषि । प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाꣳ हविषामृजुधा ज्योतिरतिरात्रः संतिष्ठते । सूर्याचन्द्रमसयोरेव तत्सायुज्यꣳ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर्य उ चैनदेवं विदुः ॥ ५३ ॥ षोडशः[1] ॥

॥ इत्यष्टादशः प्रश्नः ॥

---

१ इत्युत्तरा ततिः समाप्ता MSS.

सावित्रꣳ स्वर्गकामश्चिन्वीत । पशुबन्धे चेच्चीयते षड्ढोतारꣳ हुत्वा यूपाहुतिꣳ हुत्वा यूपꣳ सयजुषं कृत्वा वेदिं विमिमीते । वेदिस्तृतीये यजेतेति विज्ञायते । तस्याः सौमिकं मानमेतावदेव नाना । सौमिकात्प्रक्रमात्तृतीयो ऽꣳशः प्रक्रमः स्यात्तेन वेदिं विमिमीते । ऽपि वा पदाद्द्वणया[1] पार्श्वमानी पदं तिरः पश्चमानेन तयोर्यः कर्णसंमितः प्रक्रमः स इष्यते । पदाद्वा नवमस्तदद्द्वणया[2] तयोस्तु यः कर्णसंमितः स प्रक्रमार्थस्तेन[3] सेया सौमिकी वेदिरग्नीनन्वादध्याद्धृतमुपेयादिध्माबर्हिः संनह्य[4] स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थं पूर्वं परिग्राहं परिगृह्णाति करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथैतमग्निं प्रत्यञ्चं यूपावटीयाच्छङ्कोर्विमिमीते । पञ्चःसंमितश्चेतव्य इति रथचक्रमात्र एवैष उक्तो भवत्यथाप्युदाहरन्ति द्वारत्निः[5] प्रथमं चक्रं द्वौ सार्धौ मध्यमं त्रिभागोनास्त्रय उत्तममिति । तेषामन्यतममात्रीꣳ रज्जुमुभयतःपाशां कृत्वोत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य तस्मिन्पाशौ प्रतिमुच्य तस्मिन्नन्ते ऽन्यꣳ शङ्कुं

---

१ Thus MHBU ; यद॰ Be Ben.

२ Thus M Ben. ; नवमात्तस्याद्द्वणया U ; नवमस्तस्याद्द्वणया H ; नवमस्तद्द्वणया Be ; B om. the whole phrase.

३ Thus MHU ; ॰मार्धस्तेन Be Ben.

४ Thus MHUB ; संभृत्य Be Ben.

५ ॰रत्निं M.

प्रास्य तेनैनं प्रदक्षिणं परिमण्डलं[1] परिलिखत्यपोद्धृत्य सन्द्यां कर्षूः खानयन्त्युच्छ्रयन्त्यपस्या[2] । दक्षिणतश्च पश्चाच्च वर्षीयसीः कुर्वन्त्यथ याचत्याज्यस्थालीꣳ स्रुवाꣳ स्फ्यं दर्भस्तम्बमुदपात्रमौत्तरवेदिकाꣳश्च[3] संभारान्दधि मधुमिश्रꣳ हिरण्यं च शर्कराः[4] सिकताश्च[4] दर्भानित्येतत्समादायोत्तरार्धे सꣳसादयन्त्यथ द्वाभ्यामात्मन्यग्निं[5] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्यान्तःशर्करमिमामुपदधाति प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ शङ्कुमुद्धृत्योदपात्रमुपनिनीय दर्भस्तम्बमुपदधाति वाक्त्वा समुद्र उपदधात्विति वा तूष्णीं वाथैनꣳ स्रुवाहुतिभिरभिजुहोति सजूरब्दो ऽयावभिरिति पञ्चभिस्तयादेवतं कृत्वा सूददोहसं करोति । ॥ १ ॥

अथ चात्वालस्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्य यूपावटं[6] खात्वा[6] प्रोक्ष्य व्याघार्यालङ्कृत्य सिकता निवपत्यग्ने तव श्रवो वय इति

---

१ परि॰ om. M. and some of the other MSS.

२ खानयत्य॰ M.

३ च om. M.

४ सिकताः शर्कराश्च M.

५ Thus MHUB; ॰त्मंनग्निं Be Ben.

६ Om. M Be Ben.; M om. also प्रोक्ष्य।

षड्भिरनुच्छन्दसमंथोर्ध्वचित उपदधाति चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यंथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य सं ते पयाꣳसीति त्रिष्टुभा राजन्यस्य । यथासुप्तु यथाशर्करमनुव्यूहति । तस्यां[1] नव[1] परिमण्डला[1] लेखा लिखत्यंथ[2] दध्ना मधुमिश्रेण शर्कराः समज्य सायमग्निहोत्रꣳ हुत्वाग्नीन्परिस्तीर्योपवसत्यंथ प्रातर्हुते ऽग्निहोत्रे यावत्युदपात्रं भस्म पुरीषमूषान्सिकता यावदुत्तममङ्गुलिकाण्डं यज्ञपरुषा संमितं तावन्मात्रीः[3] पञ्चाशीतिशतꣳ हिरण्येष्टकाः शर्करा वा घृताक्तास्तावत्यो[4] लोकंपृणा अपरिमिता वा चतस्रः स्वयमातृण्णाः सहस्रꣳ हिरण्यशल्कानूर्ध्वं त्रिभ्यो । ऽपरिमितानित्येक आहुस्ते यदि सहस्रं भवन्ति द्वे द्वे शते पञ्चनाडीष्वोते[5] भवतो । ऽथोदित आदित्ये द्वाभ्यामात्मन्यग्निं[6] गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति । स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति । श्वेतमश्वमभिमृश्याधिद्रवणं जपत्यपामिदं न्ययनं नमस्त इति द्वाभ्यामंथापरार्ध उदपात्रमुपदधाति वाह्ला

१ Thus Ben. UH (the last तस्या); तस्यां नव मंडला Be; तस्मिन्नेव परिम° MB.

२ लिखित्वा MB.

३ °मात्रं M.

४ घृतान्वक्ता° M.

५ Thus MHU; °नाडीष्वेते B; °नाडीप्रोते Be Ben.

६ Thus MBHU; °त्मनग्निं Be Ben.

समुद्र उपदधे सुप्रजावनिꣳ रायस्पोषवनिं मह्यं यजमानायेति । तथादेवतं कृत्वा सूददोहसं करोत्यथ संभारान्निवपत्यग्नेर्भस्मासीति भस्माग्नेः पुरीषमसीति पुरीषꣳ संज्ञानमसि कामधरणमित्यूषान्मयि ते कामधरणं भूयादिति सिकता । अथैनान्संप्रयौति सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः। आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो ममेत्यथैनाङ्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः। कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता इति । ताꣳस्तथा कल्पयति यथा न लेखाः संलोपयन्ते[1] । सद्यो वा सर्वं क्रियते सद्यस्काले । ॥ २ ॥ प्रथमः ॥

अथान्तमायां लेखायां पूर्वपक्षस्य दिनेष्टका उपदधाति संज्ञानं तया देवतयाङ्गिरस्वद्ध्रुवा सीद विज्ञानं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतेषामेव दिनानां मुहूर्तेष्टका उपदधाति चित्रस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद केतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां पूर्वपक्षस्य क्षपेष्टका उपदधाति दर्शा तया देवतयाङ्गिरस्वद्ध्रुवा सीद दृष्टा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतासामेव[2] क्षपाणां मुहूर्तेष्टका उपदधाति दाता तया देवतयाङ्गिरस्वद्ध्रुवा सीद प्रदाता तया देवतयाङ्गि-

१ संयोपयंते Be Ben.

२ Thus MU ; एतेषामेव the other MSS.

रस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षस्य दिनेष्टका उपदधाति प्रस्तुतं तया देवतयाङ्गिरस्वद्ध्रुवा सीद विष्टुतं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतेषामेव दिनानां मुहूर्तेष्टका उपदधाति सविता तया देवतयाङ्गिरस्वद्ध्रुवा सीद प्रसविता तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षस्य क्षपेष्टका उपदधाति सुता तया देवतयाङ्गिरस्वद्ध्रुवा सीद सुन्वती तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । तासामन्तरालेष्वेतासामेव क्षपाणां मुहूर्तेष्टका उपदधात्यभिशास्ता तया देवतयाङ्गिरस्वद्ध्रुवा सीदानुमन्ता तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यान्तरायां लेखायां पूर्वपक्षेष्टका उपदधाति पवित्रं तया देवतयाङ्गिरस्वद्ध्रुवा सीद पवयिष्यꣳस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति द्वादश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षेष्टका उपदधाति सहस्वाꣳस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सहीयाꣳस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति द्वादश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां मासेष्टका उपदधात्यरुणस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदारुणरजास्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति त्रयोदश । सर्वासां पारे सूददोहसः करोत्यथाचैके[१]

१ Thus Be HUB ; ॰थाचैकेक Ben. ; थचैके M.

लेखान्तरालेषु[१] सिकता निवपन्त्येजत्का जीवत्का इत्यथाभ्यन्तरायां लेखायां मुहूर्तानां मुहूर्तेष्टका उपदधातीदानीं तया देवतयाङ्गिरस्वद्ध्रुवा सीद तदानीं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां क्रत्विष्टकाश्चर्त्विष्टकाश्चोपदधात्यग्निष्टोमस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदोक्थ्यस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति षडग्निर्ऋतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सूर्य ऋतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति तिस्रः । सर्वासां पारे सूददोहसः करोत्यथ मध्ये[२] नाभ्याꣳ संवत्सरेष्टका उपदधाति प्रजापतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद संवत्सरस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रः । सर्वासां पारे सूददोहसः करोति । ॥ ३ ॥

तदेताश्चतस्रः स्वयमातृण्णा याचति । ता दिक्षूपदधाति भूरग्निं च पृथिवीं चेति पुरस्ताद्भुवो वायुं चान्तरिक्षं चेति दक्षिणतः स्वरादित्यं च दिवं चेति पश्चाद्भूर्भुवः स्वश्चन्द्रमसं च दिशश्चेत्युत्तरतः । सर्वासां पारे सूददोहसः करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति । तयादेवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति

१ Thus Be Ben.; लेखाभ्यंतरेषु M; लेखांतरेषु HU; लेखायां B.
२ मध्यमे M.

ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति । प्राच्या च लोकंपृणया प्रतीत्यग्निं प्राचीभिः संप्रच्छादयन्ति । संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथानभिमृष्टं चितिकॢप्ता भवत्यथाग्निमभिमृशति[1] यत्ते ऽचितं यदु चित्तं ते अग्न इति द्वाभ्यामथ चितिकॢप्ताभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्यग्ने देवाꣳ इहावहेत्याग्नेय्या गायत्र्यैतां चितिमभिमृश्य द्वे[2] अवद्रवणे[2] जपति[2] वाङ्म आसन्प्राणदा इत्यथ[3] कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति पृष्टो दिवीति । तयादेवतं कृत्वा सूददोहसं करोत्यथ पात्र्यामप आनीय हिरण्यशल्कान्संप्रकीर्य द्वाभ्यांद्वाभ्याꣳ[4] शताभ्यां प्रोक्षति सहस्रस्य प्रमा असीति पुरस्तात्सहस्रस्य प्रतिमा असीति दक्षिणतः सहस्रस्य विमा असीति पश्चात्सहस्रस्योन्मा असीत्युत्तरतो । ऽथ मध्ये[5] द्वाभ्याꣳ शताभ्यां प्रोक्षति साहस्रो ऽसि सहस्राय त्वेत्यथोत्तरार्धे तिष्ठन्निष्टका धेनूः कुरुत इमा मे अग्न इष्टका धेनवः सन्त्वित्यान्तादनुवाकस्याथैके ऽर्कपर्णेनाजक्षीरेण[6] चरमायामिष्टकायां जुहति । स° यद्यहैनं°[7]

१ परि instead of अभि M.

२ Thus HUB; द्वे अधिद्रवणे ज॰ Be Ben; द्वाभ्यामधिद्रवति M.

३ अत्र instead of अथ M Ben. U.

४ द्वाभ्यां twice in BU only.

५ om. M.

६ अर्क॰ om. B Be H.—॰नाजाक्षी॰ Be Ben.

७ Thus M; सयदुवेनं B; दुयेहेनं Ben; यदुहैनं Be; सयउहेनं HU.

करिष्यन्भवत्यथैतस्यार्कपर्णस्य[1] पुटमन्तरवस्राविणं कृत्वोदङ् तिष्ठन्मुखदघ्ने धारयन्नाहाहरानयेति। स यत्र धारेष्टकां[2] प्राप्नोति तत्प्रतिपद्यते त्वमग्ने रुद्र इत्यान्तादनुवाकस्याथैतदर्कपर्णं यं द्वेष्टि तस्य संचरे पशूनां न्यस्यति। यद्यु वै न द्वेष्यावटे न्यस्यत्यथैनमुपतिष्ठते त्वमेव त्वां वेत्थ यो ऽसि सो ऽसीत्येतेनानुवाकेनाथ सꣳहारविहाराभ्यामुपतिष्ठते संवत्सरो ऽसि परिवत्सरो ऽसीत्येतेनानुवाकेनाथाह होतरग्नेरुक्थेनाग्निमनुशꣳसेति। [3]यदि होता न कामयते यजमान एव जघनेनाग्निं तृणानि सꣳस्तीर्य तेषूपविश्याग्नेरुक्थेनाग्निमनुशꣳसति। भूर्भुवः स्वरित्येताभ्यामृग्भ्यां[4] त्रिस्त्रिरेकैकामन्वाह प्रणवेनाभिसंधानमेवमन्यत्राप्यृगुपसंधाने प्रणवेनैवाभिसंधानमत्र[5] ये ब्राह्मणा बहुविदस्तेभ्यो यद्दक्षिणा न नयेद्दुरिष्टꣳ स्यादग्निमस्य वृञ्जीरꣳस्तेभ्यो यथाश्रद्धं दद्यात्स्विष्टमेवैतत्क्रियते। नास्याग्निं वृञ्जत इति ब्राह्मणम्। ॥ ४ ॥ द्वितीयः ॥

अथाभ्याधानप्रभृति पाशुबन्धिकं कर्म तायते। सिद्धमाग्निप्रणयनात्कृत्वाग्निं प्रणीयोपसमाधायाध्वराहुतिभिरभिहूय[6] नानाचतुर्गृहीतैरेता[6] आहुतीर्जुहोति। त्वमग्ने रुद्र

१ °त्यथैतदर्क° Be Ben.

२ °रेष्टकाग्निं M.

३ Before यदि Be HU ins. स।

४ हाभ्यां instead of ऋग्भ्यां M.

५ प्रणवेनैवचाभि° M.

६ Thus HU (only °हुतीभि°); °ध्वराहुतीभिरभिहूयमानां चतु° M; °ध्वराहुतीरभिहूयमानानां चतु° Be Ben; °ध्वराहुतिभिर्हुत्वा नानाचतु° H.

इति शतरुद्रीयस्य रूपमग्नाविष्णू इति वसोर्धाराया । अन्नपत इत्यन्नहोमः । सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीरित्यथ स्रुवेणोपघातमेकविंशतिमाहुतीर्जुहोत्यसवे स्वाहा वसवे स्वाहेति । हुत्वाहुत्वैव संस्रावान्यजमानस्याञ्जलावावपति[1] । तैर्यजमानो मुखं विमृष्टे राज्ञी विराज्ञीत्येतेनानुवाकेनोत्तरपरिग्राहप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमा मनोतायाः हुत्वा मनोतामनुद्रुत्य पशोरवदानानि संमृश्यौदुम्बरे[2] पात्रे[2] यूष्णो मृत्युग्रहं गृह्णाति विपश्चिते पवमानाय गायतेत्यनुद्रुत्योपयामगृहीतोऽसि मृत्यवे त्वा जुष्टं गृह्णामीति । दर्भैः परिमृज्योत्तरवेद्यां संसादयत्येष[3] ते योनिर्मृत्यवे त्वेत्यथ पशुना चरत्यथ वनस्पतिना चरत्यथ पुरस्तात्स्विष्टकृतोऽथैतं ग्रहं होष्यन्नप उपस्पृशति[4] विद्युदसि विद्य मे पाप्मानमित्यथ जुहोत्यप मृत्युमप क्षुधमपेतः शपथं जहि । अधा नो अग्न आवह रायस्पोषं सहस्रिणम् ॥ ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानवयजामहे स्वाहेत्यथ हुत्वोपस्पृशेद्वृष्टिरसि वृश्च मे पाप्मानमित्यथ स्विष्टकृता चरत्युपहूयमानायामिडायामुप-

---

१ Thus (°वपति) M Be Ben BU (sec. m.); °वानयति HU (pr. m.).

२ Thus all exc. B, which has °वरेण पात्रेण ।

३ सं om. HU.

४ Thus M Be Ben; °स्पृशेद् BHU.

गृह्णन्ति[1] ग्रहमुपहूतं[2] ग्रहं यजमानो भक्षयति भक्षो ऽस्यमृतभक्षस्तस्य ते मृत्युपीतस्यामृतवतः स्वगाकृतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । भक्षयित्वात्मानं प्रत्यभिमृशते मन्त्राभिभूतिः केतुर्यज्ञानामित्यान्तादनुवाकस्यानूयाजप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमा दक्षिणानां कालाद्दक्षिणानां काले धेनुमृषभमनड्वाहं दत्त्वैकविंशतिर्दक्षिणा[3] ददाति । शतं ददाति । सहस्रं ददात्यन्विष्टकं दक्षिणा ददाति । यदि न विन्देत मन्थानेतावतो दद्यादोदनान्वा । पष्ठौहीं त्वन्तर्वतीं दद्याद्धिरण्यं ददाति । वासो ददाति । तेनायुः प्रतिरत इति ब्राह्मणं । तं चेत्सौम्ये ऽध्वरे चिन्वीत प्रथमायामुपसदि क्षेत्रकरणं । मध्यमोत्तमे उपसदावन्तरेणोपधानं । काले ऽग्निप्रणयनं । दक्षिणानां काले दक्षिणाः । सवनीयस्य यूष्णो मृत्युग्रहस्तं चेदहीने सत्त्रे वा चिन्वीत प्रथमे ऽहनि दक्षिणाः प्रथमे ऽहनि यूष्णो मृत्युग्रहो । न सत्त्रे दक्षिणा नीयन्ते । नाचिकेत एव मृत्युग्रहः स्यादित्येतदपरमग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्यामिक्षया वेति । तस्यै सायमग्निहोत्रे हुते सायंदोहः प्रातरग्निहोत्रे हुते प्रातर्दोहः । पशुपुरोडाशेन सह श्रपणमसमुदिते चर्या । संतिष्ठते सावित्रः । ॥ ५ ॥ तृतीयः ॥

---

१ उपप्रगृह्णंति M.

२ ग्रहमिडोपहूतं M.

३ ददाति instead of दत्त्वा M.

अथ नाचिकेतस्य[1] । प्रसिद्धं चेत्रकरणं यथा साविचस्यैतावदेव नाना । नात्र लेखा भवन्त्यथ याजुषीरुपदधाति लोको ऽसि स्वर्गो ऽसीत्यञ्जलिनैकविंशतिं यथा निपतन्ति[2] तास्तत्रतत्रोपदधाति । तदेतदन्यत्रापि[3] प्रकीर्णानामुपधानस्य[4] निदानं । यदि[5] प्राङ्कः पञ्च पुरस्तात्पञ्च दक्षिणतः पञ्च पश्चात्पञ्चोत्तरत एकां मध्ये । ऽथ यदि त्रिवृत्सप्त पुरस्तात्तिस्रो दक्षिणतः सप्त पश्चात्तिस्र उत्तरत एकां मध्ये । ऽथ यदूर्ध्वाः[6] पश्चात्कोट्याः[7] प्रभृत्यूर्ध्वाः[8] स्वयमातृण्णावकाशाद्य यदि प्राचीः स्वयमातृण्णावकाशात्प्रभृति[9] प्राचीः । स्वयमातृण्णाभ्यः प्रभृति सिद्धमत ऊर्ध्वं । स यदीच्छेत्तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति प्राङ्गा होतुर्धिष्ण्यादुत्सर्पेदित्याहवनीयसकाशाद्येयं प्रागाद्यशस्वती सा मा प्रोर्णोतु तेजसा यशसा ब्रह्मवर्चसेनेति । तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवतीत्यथ यदीच्छेद्भूयिष्ठं मे श्रद्दधीरन्भूयिष्ठा दक्षिणा नयेयुरिति

१ नाचिकेतस्तस्य Be Ben.

२ निपतंति HUB ; निपतति Be ; निवपंति M ; निवपति Ben.

३ तेदेतद० M.

४ Thus H Be ; प्रकीर्णानामुपदधा० U ; प्रकीर्णानुपधा० Ben ; प्रकीर्णामुपधा० B ; प्रकीर्णानामुपधा० M.

५ स यदि M.

६ Thus MB ; यदूर्ध्वे H ; या ऊर्ध्वाः Be Ben ; यद्यूर्ध्वं U.

७ Thus BH ; कोटयाः U ; कोष्ठा H Ben ; कोटरा Ben ; कोष्ठः M.

८ ०र्ध्वा वा ।

९ ०काशप्र० M.

दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयाद्भूयिष्ठमेवास्मै श्रद्दधते। भूयिष्ठा दक्षिणा नयन्तीति ब्राह्मणं। संतिष्ठते नाचिकेतः। ॥ ६ ॥ चतुर्थः ॥

अथ ब्रह्मचितः[1]। प्रसिद्धं क्षेत्रकरणं यथा सावित्रस्यैतावदेव नाना। नात्र लेखा भवन्त्यथ पुरस्तादुदीचीर्दश होत्रेष्टका उपदधाति चित्तिः स्रुक्तया देवतयाङ्गिरस्वद्ध्रुवा सीद चित्तमाज्यं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति दशाथ हृदयेष्टकामुपदधाति सुवर्णं घर्मं परिवेद वेनमित्यनुद्रुत्य देवैः स मानसीन आत्मा जनानामित्यातो। ऽथ यजुरिष्टके उपदधात्यग्निर्यजुर्भिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सविता स्तोमैस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ पत्नीष्टके उपदधाति सेनेन्द्रस्य तया देवतयाङ्गिरस्वद्ध्रुवा सीद धेना बृहस्पतेस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति। सर्वासां पारे सूददोहसः करोत्यथ दक्षिणतः प्राचीश्चतुर्होत्रेष्टका उपदधाति पृथिवी होता तया देवतयाङ्गिरस्वद्ध्रुवा सीद द्यौरध्वर्युस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रो। ऽथ हृदयेष्टकामुपदधाति ब्रह्मेन्द्रमग्निमित्यनुद्रुत्य यज्ञमेतं चतुर्होतॄणामात्मानं कवयो निचिक्युरित्यातो। ऽथ यजुरिष्टके उपदधातीन्द्र उक्थामदैस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद मित्रावरुणावाशिषा तया देवत-

---

१ ब्रह्मचित्तस्य M Be.

याङ्गिरस्वद्ध्रुवा सीदेत्यथ पत्नीष्टके उपदधाति पथ्या पूषणस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद वाग्वायोस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथ पश्चादुदीचीः पञ्चहोत्रेष्टका उपदधात्यग्निर्होता तया देवतयाङ्गिरस्वद्ध्रुवा सीदाश्विनाध्वर्यू तया देवयाङ्गिरस्वद्ध्रुवा सीदेति यतस्रो । ऽपि वाश्विनाध्वर्यू इत्येतेनैव मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति । तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति[1] मन्त्रꣳ[1] संनमयत्यथ[1] हृदयेष्टकामुपदधाति शतं नियुतः परिवेदि- त्यनुद्रुत्य प्राणमुखं तेन कॢप्तो ऽमृतेनाहमस्मीत्याता । ऽथ यजुरिष्टके उपदधात्यङ्गिरसो धिष्ण्यैरग्निभिस्तया देवतया- ङ्गिरस्वद्ध्रुवा सीद मरुतः सदोहविर्धानाभ्यां तया देवतया- ङ्गिरस्वद्ध्रुवा सीदेत्यथ पत्नीष्टके उपदधाति दीक्षा सोमस्य तया देवतयाङ्गिरस्वद्ध्रुवा सीद पृथिव्यग्नेस्तया देवतयाङ्गिर- स्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथोत्तरतः प्राचीः षड्ढोत्रेष्टका उपदधाति वाग्घोता तया देवतयाङ्गिर- स्वद्ध्रुवा सीद दीक्षा पत्नी तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति षडथ हृदयेष्टकामुपदधाति सुवर्णं कोशꣳ रजसा परीवृत- मित्यनुद्रुत्येन्द्रस्यात्मानꣳ शतधा चरन्तमित्याता । ऽथ यजु- रिष्टके उपदधात्यापः प्रोक्षणीभिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदौषधयो बर्हिषा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ

१ इत्यत्र संनमयत्य॰ M ; इति मंत्रं संनमयत्य॰ H Be Ben. U (pr. m.) ; संनमत्य॰ BU (sec. m.).

पत्नीष्टके उपदधाति वसूनां गायत्री तया देवतयाङ्गिरस्वद्ध्रुवा सीद रुद्राणां त्रिष्टुक्तया[1] देवतयाङ्गिरस्वद्ध्रुवा सीदेति । सर्वासां पारे सूददोहसः करोत्यथोपरिष्टात्प्राचीः सप्तहोत्रेष्टका उपदधाति महाहविर्होता तया देवतयाङ्गिरस्वद्ध्रुवा सीद सत्यहविरध्वर्युस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति षडपि वानाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरावित्येतेन मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति । तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति मन्त्रꣳ संनमयत्यथ[2] हृदयेष्टकामुपदधातीन्द्रो राजा जगतो य ईश इत्यान्तादनुवाकस्याथ यजुरिष्टका उपदधात्यदितिर्वेद्या तया देवतयाङ्गिरस्वद्ध्रुवा सीद सोमो दीक्षया तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति त्रयोदशाथ पत्नीष्टका उपदधात्यादित्यानां जगती तया देवतयाङ्गिरस्वद्ध्रुवा सीद विष्णोरनुष्टुक्तया[3] देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यष्टादश । सर्वासां पारे सूददोहसः करोत्यथ यथावकाशं ग्रहेष्टका उपदधाति वाचस्पते विधे नामन्निति दशहोतुर्वाचस्पते वाचो वीर्येणेति चतुर्होतुः सोमः सोमस्य पुरोगा इति पञ्चहोतुर्भूर्भुवः सुवरिति षड्ढोतुर्वाचस्पते हृद्विधे नामन्निति सप्तहोतुः । सर्वासां पारे सूददोहसः करोत्यथ यथावकाशमेव प्रतिग्रहेष्टका उपदधाति । देवस्य त्वा सवितुः प्रसव इत्यनुद्रुत्यैषा ते

१ त्रिष्टुप्तया M.

२ Thus MH ; संनमत्य° the other MSS.

३ °नुष्टुप्तया

काम दक्षिणोत्तानस्त्वाङ्गिरसः प्रतिगृह्णात्वित्येकान्नविꣳशमपि वा गन्धर्वाप्सराभ्यः स्रगलङ्करणे इत्येतेन मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति। तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति मन्त्रꣳ संनमयति[1]। स्वयमातृण्णाभ्यः प्रभृति सिद्धमत ऊर्ध्वꣳ। संतिष्ठते ब्रह्मचित्। ॥ ७ ॥ पञ्चमः ॥

अथ समस्तस्य। प्रसिद्धं चैत्रकरणं यथा सावित्रस्यैतावदेव नाना। सावित्रो ऽग्निः प्रथमा चितिर्लोकंपृणा[2] द्वितीया। नाचिकेतस्तृतीया। लोकंपृणा[2] चतुर्थी। ब्रह्मचित्पञ्चमी। सर्वासु चितिषु स्वयमातृण्णा[3]। पुरीषान्तास्चितयो। ऽग्ने देवाꣳ इहावहेत्येताभिः पञ्च[4] चितीरभिमृशति[4]। तं चेत्सौम्ये ऽध्वर उत्तम[5] एव चक्रे चिन्वीत प्राग्दीक्षणीयायै दिवः श्येनीभिर्यजेतोदवसानीयाया[6] अपाघाभिः[6]। सकृत्प्रयुज्य[7] समस्यति। संतिष्ठते समस्तः। ॥ ८ ॥ षष्ठः ॥

---

१ Thus U (pr. m.); संनमति the other MSS.; M om. this passage.

२ ०पृणाभिर् (०भिस्) M Be UH, but cp. Āp. xix. 15. 11.

३ ०तृण्णाः M.

४ Thus H; पंचभिः पंच चितीर० U; पंच चितयो भिमृशति Be Ben; पंच चितयोभिमृशंते M; पंचभिश्चितीरभिमृशति B.

५ उत्तमे U; instead of उत्तम एव चक्रे M has उत्तरवेद्यां।

६ Thus HU (sec. m.); ०सानीयायापा० M Ben Be U (pr. m.); ०सायायापा० B; cp. Sāyaṇa on T Br., vol. iii, p. 815; अपाघाभिः MU Be; the other MSS. indistinctly (घ or ध).

७ प्रयुज्येमं UH; प्रयच्छ म M.

अथ वैश्वसृजस्य । प्रसिद्धं क्षेत्रकरणं यथा सावित्रस्यैतावदेव नाना । तिस्रो लेखा भवन्त्यथान्तमायां लेखायामुपदधाति यच्चामृतं यच्च मर्त्यमित्यष्टादश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां[1] लेखायामुपदधाति सर्वा दिशो दिक्ष्विति पञ्चदश । सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामुपदधाति सर्वान्दिवꣳ सर्वान्देवान्दिवीति नव । सर्वासां पारे सूददोहसः करोति । स्वयमातृण्णाभ्यः प्रभृति सिद्धमत ऊर्ध्वं । तं चेदहीने[2] सत्त्रे[2] वा चिन्वीत शतरात्रे[3] विश्वजिति सर्वपृष्ठे दक्षिणानां काले ब्रह्मा सदस्यासीनो वैश्वसृजान्व्याचष्ट[4] ऋचां प्राची महती दिगुच्यत इति[5] पच्छो ऽर्धर्चशो ब्राह्मणे[6] वाक्यशस्तस्मा अध्वर्युः प्रतिगृणात्यों बृहदृतं[7] बृहत्सत्यं बृहदरात्स्म बृहदिति । तस्योत्तमे पर्याये ऽरात्स्म[8] बृहत्संपद्यते[8] । संतिष्ठते वैश्वसृजः । ॥ ९ ॥ सप्तमः ॥

---

१ ॰थांतमायां M.

२ चेदुदीचीसावित्रे Be Ben.

३ सहस्रराात्रे ins. M.

४ वैश्वसृजान् Be Ben; विश्वंसृजान् UHB; वैश्वसृजं M.

५ इत्यृचु M.

६ ब्राह्मणं B.

७ Thus BUH; Be Ben have each time तद् after बृहत् and M reads everywhere ब्रह्मन् instead of बृहत्।

८ पराब्रह्मस्संप॰ M.

एतेनारुणकेतुको व्याख्यातो । यावन्मन्त्रमवीष्टका[१] । लोकंपृणाश्च स्वयमातृणाश्चाप एव । पुष्कारपर्णꣳ रुक्मꣳ हिरण्मयं[२] पुरुषं कूर्ममित्यातपति वर्ष्या इति यथासमाम्नातं[३] । पल्वल्या इत्यविशोष्या[४] इत्यर्थ । उत्तरवेद्यावपनकाले तां तूष्णीं जानुदघ्नीं[५] खात्वान्यत्र मृदं निवपति । विदेरग्निरित्यादि लुप्यते । ध्रुवासीति प्रतिपद्यते । हस्तग्राहमवीष्टका उपदध्यादिन्द्रं कर्णेभिरिति द्वाभ्याꣳ शान्तिं कृत्वा ताभ्यामुपदधात्यापमापामिति पञ्चभिर्महानाम्नीभिरुष्णोदकꣳ । शिवा न शन्तमेति सौषध्यो[६] ऽपो[६] ऽध्वर्यवे ददाति । स ताः प्रतिगृह्य शिवा न इत्युपदधाति । सुमृडीकेति भूमिवतीमुपदध्यादेताः पुरस्तात्स्तृतिः प्रत्यचमित्यष्टौ मध्ये शुक्रं ते अन्यदिति च । साकंजानामित्येकादश पुरस्ताद्दक्षिणतो ऽक्षिदुःखोत्थितस्यैवेति षडिहेह वः स्वतपस इति चातितास्राणीति चतस्रो मदन्तीस्तप्ताः प्रवर्ग्यवदाद्यन्तयोः शान्तिं कृत्वात्यूर्ध्वाच इति चोष्णतुमण्डलान्यव द्रप्स इति चारोग इत्यष्टौ[७] सूर्यनामभिः[७] पदशो

१ यावन्मात्रम॰ MU.

२ om. MB Be Ben.

३ ॰म्नाता M.

४ इत्यशोष्या MU BH.

५ ॰दघ्नं MU (sec. m.).

६ त्यौषध्योपो B ; सौषध्या अपो UH ; सौषध्य आपो M ; त्यौषध्या आपो Be ; सोषध्या आपो Ben.

७ Thus B Ben ; इति सप्त सूर्य॰ Be ; इत्यष्टौ सप्त सूर्य॰ HU ; M om. सूर्यनामभिः ।

यत्ते शिल्पमिति च। व्याहृतीर्जपित्वापो व इति यजमान उपतिष्ठत। एवमुत्तरैरुपस्थानं व्याहृतीर्जपित्वा। सप्त सूर्याः सप्त दिशो नानासूर्या यद् द्यावश्चित्रं देवानामिति चतस्रः सौरीः पुरस्तात्केदमभ्रमित्येकामर्धमासा इत्युपरिष्टात्काला अप्सु निविशन्त इति[1] दक्षिणतः। किं स्विदचेति पञ्च वैष्णवीः[2]। पृच्छामि त्वा परं मृत्युमिति चतस्रो मृत्युमतीः। पृच्छामि त्वा पापकृत इति चतस्रो निरयवतीर्[3] यस्मिन्नग्ने नयेति द्वे। अग्निश्च जातवेदाश्चेत्यष्टौ दिश्या दिशो व इति यजमानः। प्रभ्राजमाना इत्येकादश रुद्राः। प्रभ्राजमान्य इत्येकादश रुद्राण्यः पदशो मध्ये। रूपाणि व इति यजमानः। स्वानभ्राडित्येकादश गन्धर्वगणाः पदशः पश्चाद्गौरी मिमायेत्येका[4]। वराहवः स्वतपस इति सप्त वाताः पदशः। समानमेतदिति वृष्टिमती[5]। यदक्षरमिति लोकौ। जमदग्निरित्याप्यायितस्तच्छंयोरिति शंयुः। महस्वदित्यष्टौ संयानीः। स संग्राम इति द्वे च[6]। पवित्रवन्तः पवित्रं ते ब्रह्मा देवानामसतः सद्यः इति चतस्रः पवित्रवत्य उत्तरतो। ऽमी य ऋचा इति सप्त मध्ये। ऽन्धो मणिमिति पञ्च

---

१ द्वे ins. M.

२ Thus BHU; वैष्णव्यः M Be Ben.

३ निरपवती° B; पवमतीर° Ben; यमवतीर° Be.

४ एकां H Be Ben U.

५ °तीं HU; वृष्टिभिर् M; Be Ben om. the word.

६ om. B.

वैश्वदेवीरुत्तरत । आ तमग्ने रथमिति तिस्र । आतनुष्वेति चतस्र । आ मन्द्रैरित्येकां यजमान उपदध्याद्दण्णुभिश्चेति द्वे । सुब्रह्मण्योमित्येकामरुणाश्वा इति चतस्रो रेवतीर्ब्रह्मण उदरणमसीति चतस्रो ब्रह्मसदना । अष्टयोनीमित्यष्टौ दिश्या । मित्रस्य वरुणस्येत्यष्टौ दिश्याः । पुष्करपर्णꣳ रुक्मꣳ हिरण्मयं पुरुषं कूर्ममिति महाग्निवदेव[1] । तान्युपधाय हꣳसः शुचिषदिति द्वे दूरोहणे पुरुषमभितस्तद्दित्पदमिति द्वे मध्ये । वसूनाꣳ रुद्राणामित्यष्टावुत्तरतो । रश्मयो व इति यजमान । आरोगस्येत्यष्टावुपरिष्टादापो व इति यजमानः । प्रभ्राजमानानामित्येकादश प्रभ्राजमानीनामिति चैकादश मध्ये । रूपाणि व इति यजमानो । ऽग्नेः पूर्वदिश्यस्येत्यष्टौ दिश्या । दिशो व इति यजमानो । दक्षिणपूर्वस्यामिति चतस्रो नरकवतीर्यथालिङ्गमां यस्मिन्निन्द्रियाणि शतक्रतविति द्वे दक्षिणत । इन्द्रघोषा वः संज्ञानमिति षड् दिश्या । आदित्य सर्व इति पञ्च दिश्या । एवा ह्येवेति षड् दिश्या । आपमापामिति नवोपरिष्टादपाꣳ रसमित्येकां । कामस्तदग्र इति संकल्पवतीमापो हि यदित्योघवतीं । विधाय लोकानिति स्तम्भनवतीं । केतव इत्येकामिमा नु कमिति तिस्र । आप्लवस्वेति सप्तदश चपण्यो । विशीर्ष्णीमिति द्वे । पर्जन्यायेति

---

१ Thus H Be; °वदेव B; M Ben U om. एव, but M has एतानि instead of the following तानि।

तिस्रः। पुनर्मामैत्विति च तिस्रः[१]। स्वयमातृण्णादि समानमुत्तरꣳ सावित्रेण। स्वयमातृण्णा लोकंपृणाश्चैता आपः पञ्च चितयो भवन्ति। प्रतिदिशं चितीः[२] पुष्करपर्णादिभिः प्रच्छादनं। लोकं पृणयैव द्वितीयामन्याः प्रथमचितिवन्न पुष्करपर्णादय। उत्तरतो[३] लोकंपृणयापवर्गो। दीर्घदारुभिर्मन्त्रं[४] कृत्वा पृष्टो दिवीति पुरीषव्यूहनमन्त्येष्टके[५] शतरुद्रीयहोमो। ऽनुशꣳसनान्ते ऽग्निप्रणयनꣳ। ह्रयमानायां[६] वैश्रवणयज्ञो ब्राह्मणेन[७] व्याख्यातो ऽन्नकामस्य सर्वकामस्य[८] वा पर्वणिपर्वणि वैश्रवणयज्ञः। सोत्तरवेदिषु क्रतुषु चिन्वीतेति यथाब्राह्मणं[९]। तस्यैतद्व्रतमिति यथाब्राह्मणं संमितास्व[१०] व्रतसमुच्चया[१०]। आपो न बीभत्स्या यथाब्राह्मणमेककामः[११]

---

१ चतस्रः M; चतिस्रः the other MSS.

२ चितिं H चितिः U.

३ उत्तर Be Ben.

४ ०र्मैत्रं M.

५ ०मंत्येष्टकोर्ध्वं MUH.

६ Uncertain reading; ह्रयमानायां U Be BU; ह्रियमाणायां M; ह्रीयमाणायां Ben.

७ Thus Sāyaṇa (comm. on Taitt. Âr.); ब्राह्मण MUH; ब्राह्मणे Be Ben; B om. the word.

८ स्वर्ग० M.

९ चेतव्यस् ins. M.

१० Uncertain reading; HU read as given in the text; संमितं व्रतसमुच्चय B; समभितस्व व्रतसमुच्चय Be Ben; संमितव्रतसमुच्चय M.

११ यथाब्राह्मणमेककामः Be Ben; यथाब्राह्मणकामः HBUM.

सर्वकामो वा । आपो[१] वा इदꣳ सर्वमिति ब्राह्मणं[२] विज्ञायते ब्रह्म वा आपो यदाप[३] उपधीयन्ते ब्रह्म[४] वै[४] तदात्मन्धत्ते ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोति य एतमग्निं[५] चिनुत इति । संतिष्ठत आरुणकेतुकः संतिष्ठत आरुणकेतुकः । ॥ १० ॥ अष्टमः ॥[६]

॥ इत्यत्येकोनविꣳशः प्रश्नः ॥

---

१ वापो UBH वा चापो Be.

२ om. M.

३ Thus MU (pr. m.); यदप all the other MSS.

४ ब्रह्मैव M.

५ Be Ben ins. चित्वा ।

६ Adhyāya numbers for this praśna are found only in M.; the MSS. agree all in designing this praśna as काठकसूत्रम् or काठकम् ।

## CORRIGENDA.

| | | | | | | |
|---|---|---|---|---|---|---|
| Page | 20, | l. 8, | *read* | तन्नः | *instead of* | तन्न |
| ,, | 70, | l. 12 | ,, | ॰घारयत्य॰ | ,, | ॰धारयत्य॰ |
| ,, | 96, | l. 10 | ,, | षोडशतय्य | ,, | ॰तर्यं |
| ,, | 187, | l. 4 | ,, | ऽब्रवी॰ | ,, | ऽब्रो॰ |
| ,, | 200, | l. 1 | ,, | उवेवैष[१] | ,, | उ[१]वैवैष[१] |
| ,, | 226, | l. 5 | ,, | सुवर्णमये॰ | | |
| ,, | 336, | note ६ | ,, | ॰च्छरि॰ | | |